## प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ २ ॥

हाद्बहिर्देशान्तरं गत्वा स्वप्नान्पश्यति । यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये[1] देशे स्वप्नान्पश्यन्निव दृश्यते । न च तद्देश[2]प्राप्तेरागमनस्य च दीर्घः काल[3]ोऽस्ति । अतोदीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति । किञ्च प्रतिबुद्धश्च वै सर्वः स्वप्नदृक्स्वप्नदर्शनदेशे न विद्यते । यदि च स्वप्ने देशान्तरं गच्छेद्यस्मिन्देशे स्वप्नान्पश्येत्तत्रैव [4]प्रतिबुध्येत । नचैतदस्ति । रात्रौ [5]सुप्तोऽहनि[6] इव भावान्पश्यति बहुभिः संगतो यैश्च संगतो भवति तैर्गृह्येत[7] । न च गृह्यते । गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । न चैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥ २ ॥

विपक्षे दोषान्तरमाह । **प्रतिबुद्धश्चेति** । व्यावर्त्यामाशङ्कामनुवदति । **स्वप्नेति** । तेषां देहान्तःसङ्कुचिते नाडीदेशे स्थितिदर्शनान्मिथ्यात्वमित्येतदपि असम्प्रतिपन्नमित्यत्र हेतुमाह । **यस्मादीति** । पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते । एतच्छब्देन चोद्यं परामृश्यते । स्वप्नद्रष्टा गत्वा स्वप्नान्न पश्यतीत्यत्र हेतुमाह । **यस्मादीति** ॥ इवशब्दस्तु पूर्ववत् । तथापि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्धारितमि[8]त्याशङ्क्याह । **नचेति** । स्वप्नः सत्यो न भवति उचितकालविकलत्वात्संप्रतिपन्नवदित्यभिप्रेत्य फलितमाह । **अत इति** । इतश्च न [9]देहाद्बहिर्देशान्तरे स्वप्नदर्शनमित्याह । **किंचेति** । सर्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान्पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति किन्तु शयनदेशे वर्तते तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह । **यदि चेति** । अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति । **रात्राविति** । यद्यपि रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति [10]सुप्तः संहृतचक्षुरादि[11]करणोऽपि पश्यति । शयानो[12]ऽपि पर्यटनं प्रतिपद्यते । यद्यपि सहायविहीनः सुप्तस्तथापि बहुभिः [13]सहायैः स्वप्नानुपलभते । तस्मादुचितस्य काल[14]स्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शना[15]त्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः । स्वप्नमिथ्यात्वे हेत्वन्तरमाह । **यैश्चेति** । सहदर्शिभिरगृह्यमाण[16]त्वं स्वप्नद्रष्टुरसंप्रतिपन्नमित्याशङ्क्याह । **गृहीतश्चेदिति** । पुरुषान्तरसंवादादर्शना[17]त्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावा[18]त्तन्मिथ्यात्वं सिद्धमित्युपसंहरति । **तस्मान्नेति** ॥ २ ॥

---

१ च. °प्राप्यदे°। २ छ. °द्देशे प्रा°। ३ छ. °लो अ°। ४ छ. प्रबु°। ५ ख सुषुप्तो । ६ च. °नि भा°। ७ छ. ज. °व च भा°। ८ ग. °त्याह । ९ ङ. देशाद्ब°। १० ख. ग. झ. सुषुप्तः । ११ घ. °दिकार°। १२ ग. °नो प°। १३ क. ग. सहायः । १४ घ. झ. °स्य कार°। १५ ग. ज. °तन्मि°। १६ घ. °णत्वद्र°। ज. °णत्वाद्र°। १७ ख. °नाद्दे°। १८ घ. ङ. °वान्मि°।

**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।**
**वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥ ३ ॥**

---

इतश्च स्वप्न[1]दृश्या भावा वितथाः । यतोऽभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते । न्यायपूर्वकं[2] युक्तितः । श्रुतौ न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वा[3]दिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥ ३ ॥

---

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह । **अभावश्चेदिति** । न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वमात्मनो दर्शयन्त्या[4] तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभवद्योतकन्यायपुरःसरं श्रूयते । अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्य[5]भावानामस्ति मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति । तथा च स्वप्ने[6] भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः । हेत्वन्त[7]रपरत्वं श्लोकस्य दर्शयति । **इतश्चेति** । इतःशब्दार्थमेव स्फुटयति । **यत इति** । ज्ञेयाभावे ज्ञानाभावादर्थाज्ज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं चशब्दः । श्रूयते न तत्रेत्याद्यायां श्रुताविति संबन्धः । न्यायपूर्वकमिति व्याचष्टे । **युक्तित इति** । योग्यदेशाद्यभावो युक्तिः । तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राह । **तेनेति** । अन्तःशरीरमध्य[8]स्थानं नाडीलक्षणम् । तत्रातिसूक्ष्मे संवृतत्वेन सङ्कुचितत्वेनावस्थानं पर्वतादीनामुपलभ्यते । ततश्चो[9]चितदेशाभावो योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां[10] भावानां वैतथ्यं तदेव[11] तदनुवादिन्या श्रुत्यापि प्रकाशितमित्या[12]हुर्ब्रह्मविदः । जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादासनादिव्यवहारस्य तन्निमित्त[13]त्वसंभवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्धारयितुं शक्यते । स्वप्ने पुनः सूर्याद्यभावेऽपि व्यवहारदर्शनात्तस्य च निमित्तापेक्ष्यत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात्तत्रात्मनः स्वयं ज्योतिष्ट्वं प्रतिपादयितुं न तत्रेत्याद्या श्रुतिः । तया तत्परया न्याय[14]सिद्धं स्वप्नमिथ्यात्वमनुवदन्त्या तद[15]प्रतिपादितमपि प्रकाशितमिष्यते । तथा[16] च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तसिद्धि[17]रित्यर्थः ॥ ३ ॥

---

१ घ. ङ. °दृश्यभा° । २ झ. °वंकयु° । ३ झ. °दितिहे° । ४ ख. °यन्त्यां त° ५ ख. °स्वप्ने दृ° । ६ ग. झ. स्वप्नभा° । ७ ग. °त्वन्तरत्वं । ८ ख. ग. झ. °मध्ये स्था° । ९ छ. °श्चोदित° । १० घ. ज. झ. °नां वै° । ११ ग. सदेव । १२ घ. ङ ज. °मितिब्र° । १३ झ. °त्तत्वं सं° । १४ घ. ज. °यसिद्धस्व° । १५ घ. °दपि प्र° । १६ ख °थापि श्रु° । १७ झ. °सिद्धेरि° ।

अन्तस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम्।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥
स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥

---

जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा। दृश्यत्वादिति हेतुः। स्वप्नदृश्यभाववदिति दृष्टान्तः। यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं तथा जागरिते[3]ऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः। तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनम्। अन्तःस्थानात्संवृतत्वे[4]न च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः। दृश्यत्वमसत्यत्वं चाविशिष्टमुभयत्र ॥४॥

प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाह। विवेकिन इति। पूर्वप्रमाणसिद्धस्यैव फलम् ॥ ५ ॥

---

उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह। अन्तःस्थानादिति। भेदानामित्यत्र सूचितमनुमा[7]नमारचयति। जाग्रदिति। तृतीयेन पादेन पक्षधर्मत्वं व्याप्तस्य हेतोरुच्यते तद्दर्शयति। यथेति। द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूत्रित[10]मित्याह। तस्मादिति। सर्वद्वैतवैतथ्यवादिनां केन विशे[11]षेण पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह। अन्तःस्थानादिति। स्वप्नदृश्यानामन्तःस्थानं संवृतत्वं च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटम्। सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वम्। जागरितस्य पुनरुचितदेशादिसद्भावादस्फु[12]टमिथ्यात्वमिति पक्षत्वमित्यर्थः। तर्हि सर्वथा वैषम्याद्दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याह। दृश्यत्वमिति ॥ ४ ॥

स्वप्न[13]वज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्या[14]दौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह। स्वप्नेति। उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह। भेदानामिति। भेदा भिद्यमाना भावाः। तेषामवस्थाद्वयवर्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम्। तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं सा[15]धनं[16]स्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति। प्रसिद्धेनैवेति ॥ ५ ॥

---

१ घ. ङ. च. ज. झ. तथा जाग°। २ क. °रिते स्था°। ३ झ. °ते दृ°। ४ क. °न न च स्व°। ५ ख. घ. ङ. ज. °सत्त्वं चा°। ६ क. °योरैक्यत्व°। ७ छ. मानं र°। ८ छ. व्याप्यस्य। ९ ग. छ. झ. सूचित°। १० घ. °द्वैतीयेन पादेन प्रतिकूलप्रमावै°। ११ छ. °शेषणेन प। १२ ङ. झ. °स्फुटं मि°। १३ ग. °प्नजाग°। १४ घ. ज. °त्यादिजा°। १५ ख. °धनं स्था°। १६ ग. ज. झ. °नेद्व°।

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥**
**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।**

---

इतश्च वैतथ्यं जाग्रद्दृश्यानां[1] भेदानामाद्यन्तयोरभावाद्यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके। तथेमे जाग्रद्दृश्या भेदाः । आद्यन्तयोरभावाद्वि[2]तथैरेव मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव तथाऽप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः ॥ ६ ॥

स्वप्नदृश्यवज्जागरि[3]तदृश्यानामप्यसत्त्व[4]मिति यदुक्तं तदयुक्तम् । यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासा[5]दिनिवृत्तिं कुर्वन्तो गमनागमनादिकार्यं च सप्रयोजना[6] दृष्टाः । न तु स्वप्नदृश्यानां तदस्ति । तस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं[7] मनोरथमात्रमिति । तन्न[8] । कस्मात् । यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा स्वप्ने[9] विप्रतिपद्यते । जागरिते हि भुक्त्वा पीत्वा[10] च तृप्तो विनिवर्तिततृट् सुप्तमात्र एव

---

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह । **आदाविति** । यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धस्वप्नादिभिः समत्वान्मिथ्या[11] कथं तर्हि[12] तेषां घटः सन्पटः सन्नित्यमृषात्वेन प्रतीतिरित्याशङ्क्याह । **वितथैरिति** । प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपर[13]त्वं श्लोकस्योपन्यस्यति । **इतश्चेति** । विमतं मिथ्या[14] आदिमत्वादन्तवत्त्वात्स्वप्नादिवदित्यर्थः । उक्तानुमाने[15]द्रढिम्ने व्याप्तिं कथयति । **यदादा[16]विति** । यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः । व्याप्तिमतः साधनस्य पक्षधर्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं[17] निगमनं दर्शयति । **तथेति** । अनुमानस्य घटादिषु सर्व[18]ग्राहकप्रत्यक्षविरोधमाशङ्क्य सद्गन्धर्वनगरमितिवत्तस्यापातिकसत्त्वविषयत्वान्मैवमित्याह । **तथापीति** ॥ ६ ॥

स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति किन्तु फलपर्यन्तत्वाभावाज्जागरितस्य फलपर्यन्तत्वान्न मिथ्यात्वमित्याशङ्क्याह । **स प्रयोजनतेति** । फलपर्यन्तताराहित्योपाधेः साधनव्यापकत्वे फलितमाह । **तस्मादिति** । जाग्रद्दृश्या भावा बहू[19]क्त्या गृह्यन्ते । श्लोकस्य व्यावर्त्यामुपाध्याशङ्कामु[20]त्थापयति **स्वप्नेति** । जाग्रद्दृश्यानामिव स्वप्नदृश्यानां[21]-

---

१ छ. °श्यानामा° । २ झ. °वाद्यद्वि° । ३ क. °रितं द° । ४ ग. घ. ज झ. °सत्यत्वमि° । ५ छ. °सानि° । ६ छ. °जनता द° । ७ च. सत्यत्वं म° । ८ क. तत्र । ९ छ. °प्ने प्र° । १० झ. °त्वा तृ° क. °त्वाचातृ° । ११ छ. °थ्या त° । १२ ख. °र्हि घ° । १३ छ. °रत्वे श्लो° । १४ घ. ङ. ज. °थ्याद्यन्तव° । १५ क. °नजडिम्ने । १६ छ. °दावन्त इति । १७ ङ. °चने नि° । १८ क. °स्वसाधक° । १९ ग. झ. बहुयुक्त्या । २० ख. °मुपपादयति । २१ ज. °श्यानां तु° ।

**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ७ ॥**
**अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्।**

---

क्षुत्पिपासाद्यार्तमहोरात्रोषितम्[1]भुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा[2] चातृप्तोत्थितस्तथा। तस्माज्जाग्रद्दृश्यानां स्वप्ने[3] विप्रतिपत्तिर्दृष्टा[4]। अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः ॥ ७ ॥

स्वप्नजाग्रद्भेदयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत्। कस्मात्। दृष्टान्तस्यासिद्धत्वात्। कथम्। नहि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते। किन्तर्हि। अपूर्वं स्वप्ने पश्यति चतुर्दन्त[5]गजमारूढमष्टभुजमात्मानं मन्यते। अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने। तत्रान्येन[6]ासता सममिति सदेव[7]। अतो दृष्टान्तोऽसिद्धः। तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम्। तन्न[8]। स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः[9] सिद्धम्। किन्त-

---

मपि तुल्यं सप्रयोजनत्वमित्युपाधेरसंभवम्[10]आशङ्क्याह। **नन्विति**। अनुमानस्य सोपाधिकत्वेनासाधकत्वे फलितमाह। **तस्मादिति**। हेतोः सोपाधिकत्वं[11] दूषयति। **तन्नेति**[12]। साधनव्याप्त्यादिदोषादृते नोपाधिनिरसनं सुशकमित्याह[13]। **कस्मादिति**। फलपर्यन्तताविरहित्वो[14]पाधेः साधनव्याप्तिम्[15]आह। **यस्मादित्यादिना**। तामेव विप्रतिपत्तिं प्रकटयति। **जागरिते हीति**। उक्तमर्थं दृष्टान्तेन[16] स्पष्टयति। **यथेत्यादिना**। उपाधेः साधनव्याप्तिं निगमयति। **तस्मादिति**। [17]हेतोः सोपाधिकत्वाभावे फलितमाह। **अत इति**। हेतुद्वयमुपसंहरति। **तस्मादिति** ॥ ७ ॥

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति। **अपूर्वमिति**। यथा स्वर्गनिवसनशीलानामिन्द्रादीनां सहस्राक्ष[18]त्वादिधर्मस्तथा यदिदमपूर्वं[19]स्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः। तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः। कथं तेनैव दृष्टत्वं तत्राह। **तानयमिति**[20]। यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रत्यान्पदार्थान्वीक्षते तथाऽयं स्वप्ने[21]द्रष्टा स्वप्नगतान्पदार्थान्यथोक्तप्रकारान्प्रतिपद्यते। ततश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पा[22]दिवन्मिथ्यात्व-

---

१ छ. °मनुभु°। २ ख. °त्वा च तृ; घ. ङ. च. °त्वा तृ°। ३ क. °प्नेऽपि वि°। ४ च. °दृश्यतेऽतो°। ५ ग. घ. ङ. च. छ. °दन्तं ग°। ६ च. °तत्रान्ये°। ७ क. °देवातो द°। ८ क. तन्न। ९ क. तत्तु स्व°। १० क. °वमित्याश°। ११ छ. °कत्वे दू°। १२ क. तन्नेति। १३ क. °त्याशङ्क्याह। १४ ख. ग. ङ. °हितत्वोपा° क. °हितोपा°। १५ छ. °सिफलमा°। १६ क. °न स्फुटय°। १७ ग. हेतोरोपा°। १८ ङ. °स्राक्षादि°। १९ ङ. °पूर्वं स्व°। २० ङ. °ति। तयै°। २१ क. °प्रग°। २२ छ. °सर्पत्र°।

**तानयं प्रेक्षते गत्वा यथैवेह[1] सुशिक्षितः ॥ ८ ॥**

र्हि । अपूर्वं[2]स्थानिधर्मो हि स्थानिनो द्रष्टुरेवं[3] हि स्वप्नस्थानवतो धर्मः । यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः । न स्वतःसिद्धो द्रष्टुः स्वरूपवत् । तानेवं प्रकारा[4]नपूर्वान्स्वचित्तविकल्पानयं स्थानी[5] स्वप्नदृक्स्वप्नस्थानं गत्वा प्रेक्षते । यथैवेह लोके सुशिक्षितो[6] देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा[7] तान्पदार्थान्पश्यति तद्वत् । तस्माद्यथा स्थानिधर्माणां[8] रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वमतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥ ८ ॥

मित्यर्थः । श्लोकं[9]व्यावर्त्यामाशङ्कामुपन्यस्यति । **स्वप्नेति** । समत्वमाद्यन्तवत्वादि[10] । अनुमानसिद्धस्यार्थस्यानुमानदोषोक्तिमन्तरेणासत्त्वमयुक्तमिति पृच्छति । **कस्मादिति** । व्याप्तिभूमिं दूषयन्व्याप्तिभङ्गं दोषमाह । **दृष्टान्तस्येति** । असिद्धत्वं प्रश्नपूर्वकं विशदयति । **कथमित्यादिना** । अपूर्वं[11]दर्शनमेव विवृणोति । **चतुर्दन्तमिति** । अन्यदपि त्रिनेत्रत्वादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्ता[12]नुमानानुपपत्तिरिति फलितमाह । **तस्मादिति** । दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति । **तन्नेति** । तत्किं स्वभावतः[13] सिद्धं[14] परतो वा । नाऽऽद्यः । जडस्य तदयोगादित्याह । **न तदिति** । द्वितीये तन्मिथ्यात्वं[15]मित्यभिप्रेत्य प्रश्नपूर्वकमाद्यपादमवतारयति । **किन्तर्हीति** । तद्गतान्यक्षराणि व्याकरोति । **स्थानिन इति** । अपूर्वं[16]स्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टान्तेन साधयति[17] । **यथेत्यादिना** । अपूर्वदर्शनं स्वप्न[18]द्रष्टृ[19]धर्मोऽपि चैतन्यवत्किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमित्याह । **न स्वत इति** । उत्तरार्धं विभजते । **तानित्यादिना** । अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वे[20]ऽपि किमायातमित्याशङ्क्याह । **तस्मादिति** । स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति । **अतो नेति**[21] । पूर्वस्यापूर्वस्य वा स्वप्नदर्शनस्य स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वा[22]द्दृष्टान्ते साध्यसंप्रतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः ॥ ८ ॥

१ क. यदैवे° । २ ख. च. छ. ज. झ °वंमित्यपूर्वं स्था° । ३ घ. ङ. च. ज. झ. °व स्व° । ४ क. °काशन° । ५ ज. °नीयस्व° । ६ ज. झ. °क्षितं दे° । ७ घ. ङ. च. ज. झ. त्वा° पश्य° । ८ घ. ङ. ज. °णां च स्था° । ९ छ. कस्य व्या° । १० ग. ङ. छ. झ. °दिति । अ° । ११ क. °पूर्वं द° । १२ घ. ज. °नुपप° । १३ ख. छ. झ. स्वतः । १४ घ. सिद्धिं किंवा प° । ख. ज. झ. सिद्धं किंवा प° । १५ ख. ङ. छ. ज. झ. °त्वसिद्धिरित्य° । १६ घ. ङ. झ. °र्वस्य स्व° । १७ ग. झ. °ति । तये° । १८ ज. °प्रदृष्ट° । १९ छ. °द्रष्टृध° । २० ज. °त्वे कि° । २१ क. °ति । अपूर्वस्यानपू° । २२ क. °सित्व° ।

स्वप्नवृत्ता[1]व[2]पि त्वन्तश्चेतसा कल्पितं[3] त्वसत्।
बहिश्चे[4]तोगृहीतं[5] सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥
जाग्रद्वृत्ताव[6]पि त्वन्तश्चेतसा कल्पितं[7] त्वसत्।
बहिश्चे[8]तोगृहीतं सद्युक्तं[9] वैतथ्यमेतयोः ॥ १० ॥
उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि।

अपूर्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह। स्वप्नवृत्तावपि[10] स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसंकल्पितमसत्[11]। संकल्पा[12]नन्तर[13]समकालमेवो[14]दर्शनात्तत्रैव स्वप्ने बहिश्चेतसा[15] गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्य[16]मिति निश्चितेऽपि सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतःकल्पितयो[17]र्वैतथ्यमेव दृष्टम्[18] ॥ ९ ॥

सदसतोर्वैतथ्यं युक्तम्। अन्तर्बहिश्चेतःकल्पितत्वाविशेषादिति। व्याख्यातमन्यत् ॥ १० ॥

चोदकश्चाह। स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं[19] क एतानन्त-

जाग्रद्दृश्यानां मिथ्यात्वं[20] तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन समाधत्ते। स्वप्नवृत्ताविति। श्लोकस्य तात्पर्यार्थमाह। अपूर्वत्वेति। स्वप्नदृष्टान्तस्यापूर्व[21]दर्श[22]नै[23]रत्वप्रयुक्तां साध्यविकलत्वशङ्कां परिहृत्येति यावत्। स्वप्नस्थाने सर्वस्यै[24] मिथ्यात्वाविशेषेऽपीत्यर्थः। असत्त्वं[25] परमार्थसद्[26]विलक्षणत्वेन मिथ्यात्वं। तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह। उभयोरिति ॥ ९ ॥

दार्ष्टान्तिकमाह। जाग्रदिति। युक्तत्वे हेतुमाह। अन्तरिति[27]। श्लोकस्थानामक्षराणां व्याख्यानमनपेक्षितं व्याख्यातप्रायत्वादित्याह। व्याख्यातमिति ॥ १० ॥

सर्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या[28] [29]विशेषमाशङ्कते। उभयोरिति।

१ घ. च. °त्ताप्यन्त°। २ ज. झ. °वप्यन्त°। ३ घ. ज. झ. °तमस°। ४ च. ज. ङ. झ. °श्चेतसा गृ°। ५ च. °तं सदसतोर्वैतथ्यं दृष्टम् ॥ ९ ॥ ६ घ. ज. झ. °वप्यन्त°। ७ घ. ज. झ. °तमस°। ८ घ. ज. झ. °श्चेतसा गृ°। ९ घ. ज. झ. °तं हि सत्सदसतोर्वैतथ्यं युक्तम् ॥१०॥ १० झ. °पि स्था°। ११ ज. °सत्कल्पनान°। १२ घ. ङ च. झ. °कल्पनान°। १३ च. न्तरं स्वप्नस°। १४ च. °मेव द°। १५ च. °तसां गृ°। १६ छ. °सत्यमि°। १७ च. °ततया वैत°। १८ घ. ङ. च. ज. झ. °म् ॥९॥ अ°। १९ च. °थ्यं तर्हि क°। २० घ. ज. मिथ्यात्वे। २१ ज. °र्शनात्प्रयु २२ घ. °नत्वप्रयु° २३ घ. ज. पूर्वस्य। २४ ख. °र्वस्यापूर्वस्य। २५ घ. ङ. ज. असत्यत्वं। २६ क. °र्थतद्वि°। २७ ख. घ. ङ. ज. °न्त इति। २८ ग. ज. झ. °त्यापि विरोधमा°। २९ ख. घ. ङ. छ. °विरोधमा°।

**क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः ॥ ११ ॥**
**कल्पयत्यात्मनाऽऽत्मानमात्मा देवः स्वमायया ।**

बहिश्चेतःकल्पितान्बुध्यते । को वै तेषां विकल्पकः । स्मृतिज्ञानयोः क आलम्बनमित्यभिप्रायः । न चेन्निरात्मवाद इष्टः ॥ ११ ॥

स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन् । स्वयमेव च तान्बुध्यते भेदांस्त-

कर्तृकरण[4]व्यवस्थानुपपत्त्याऽपि विरोधोऽस्तीत्याह । **को वा इति** । विकल्पको निर्मातेति यावत् । श्लोकस्य चोद्यपरत्वं प्रतिजानीते । **चोदक इति** । अक्षरयोजनया प्रथमार्थापत्तिविरोधं स्फो[8]रयति । **स्वप्नेति** । चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं[9] स्फुटयति । **को वै तेषामिति** । कर्ता हि पूर्वानु[10]भूतं स्मृत्वा तज्जातीयान्निर्मिमीते[11] तेन स्मृत्यनुभवाश्रयाक्षेपेण कर्त्राक्षेपो विवक्षितस्तथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः । योऽध्यात्मं प्रमाता यश्चाधिदै[11]वं कर्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारात्प्रमात्रादेरस[12]त्त्वमित्याशङ्क्याह । **न चेदिति** । यदि प्रमाता कर्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते । न च त[13]दिष्टुं शक्यते आत्मनि[14]राकरणस्य दुष्करत्वान्निराकर्तुरेवात्मत्वादित्यर्थः ॥ ११ ॥

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति । **कल्पयतीति** । करणान्तरं व्यवच्छि[15]नत्ति । **आत्मनेति** । कर्मान्तरं व्यावर्तयति । **आत्मानमिति** । कर्त्रन्तरं निवारयति । **आत्मेति** । तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति । **देव इति** । विवर्तवादं द्योतयति । **स्वमायये-ति** । सर्वस्य मिथ्यात्वेऽपि मा[16]यया विकल्पितभेदानुरोधेन कर्तृत्वादिव्य[17]वस्था सिद्ध्यतीति भावः । प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह । **स एवेति** । एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिकभेदनिबन्धना सर्वा व्यवस्थेत्यत्र प्रमाणमाह । **इति वेदान्तेति** । यथा घटस्रष्टा कुलालोऽधिष्ठाता मृदोऽन्यो दृष्टो न तथेहान्योऽधिष्ठाताऽस्तीत्याह । **स्वयमिति** । यथा तत्र मृदाख्यमुपादानमधिष्ठातुरन्यदधिगतं न तथात्रान्यदुपादानमस्तीत्याह । **स्वमात्मानमिति** । तत्र च घटं कुर्वतो भूभागो भवत्या-

१ क. °मात्मदेहः स्व° । २ च. नो । ३ च. °ष्टः स्यादिति ॥११॥ ४ छ. च तांस्त° । ५ ग. छ. ञ. °र्तृकार्यक° । ६ ख. घ. ङ. णकार्यव्य° । ७ ज. स्फोटयति । ८ ख. ग. घ. °धं स्फोरय° । ९ क. °नुभूतं स्मृ° । १० क. °तेनुस्मृ° । ११ घ. °दैवक° । १२ °सत्यत्वमि° । १३ क. तद्द्रष्टुं । १४ क. °नि क° । १५ छ. °छिनत्तिकर्त्र° । १६ ज. माया°; ख. ग. छ. ञ. मायाक° । १७ क. °वहारः सि° । १८ ञ. °थान्य° ।

**स एव बुध्यते भेदानिति वेदान्तनिश्चयः॥१२॥**
**विकरोत्यपरान्भावानन्तश्चित्ते व्यवस्थितान्।**

द्वदेवेत्येवं वेदान्तनिश्चयः। नाऽन्योऽस्ति ज्ञानस्मृत्याश्रयः। नच निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः॥ १२॥

सं[1]कल्पयन्केन प्रकारेण कल्पयती[2]त्युच्यते। विकरोति ना[3]ना करोत्यपराँल्लौकिकान्भावान्पदार्थाञ्छब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतान्नियतांश्च पृथ्व्यादीननियतांश्च कल्पनकाला[4]न्बहिश्चि-

धा[5]रो न तथेहाधारोऽन्योऽस्ती[6]त्याह। **आत्मन्येवेति**। परिणामवादं व्यावर्त्य विवर्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह। **रज्ज्वादाविति**। मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्त्वा तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह। **स्वयमेव चेति**। न च प्रमातृत्वस्य तात्त्विकतत्त्वं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्धारणादित्याह। **तद्वदिति**। कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे नेह नानाऽस्तीत्यादिश्रुतिं प्रमाणयति[7]। **इत्येवमिति**। स एवेत्येवकारार्थमाह। **नान्योऽस्तीति**। यो जगत्स्रष्टा यश्च प्रमाता ततो[8]ऽन्यो ज्ञानस्य स्मृतेश्चाश्रयो नास्ति। चेतनभेदे मानाभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वा[9]दित्यर्थः। ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्याशङ्क्याबाधितप्रसिद्धिविरोधान्मैवमित्याह। **न चेति**॥ १२॥

प्रकृता[10]यां कल्पनायां विवक्षितं क्रममुपन्यस्यति। **विकरोतीति**। नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते। प्र[11]ति[12]पिपित्सितक्रमप्रतिपत्त्यर्थं पृच्छति[13]। **संकल्पयन्निति**। श्लोकाक्षरयोजनया बुभुत्सि[14]तं क्रमं प्रत्याययति। **उच्यत इत्यादिना**। अन्यांश्चेति शास्त्रीयानिति यावत्। चित्तमध्ये वासनारूपेण व्यवस्थिता[15]न्। अनभिव्यक्तनामरूपत्वेन व्यवहा[16]रायोग्यत्वमाह। **अव्याकृतानिति**। कल्पनाका[17]लान्विद्युदादीनस्थिरानित्यर्थः। बहिश्चित्तो बहिर्मु[18]खो बाह्यान्व्यवहारयोग्यान्पदार्थान्कल्पयति। अन्तश्चित्तस्तु तेभ्यो व्या[19]वृत्तबुद्धिर्मनोरथा[20]दिलक्षणानात्मन्य[21]व्यवस्थितान्भावान्व्यवहा[22]रायोग्या-

१ छ. स क°। २ च. °तीत्येवेत्यु°। ३ ज. °नाक°। ४ च. °लाद्वहि°। ५ क. °धारस्तथे°। ६ ख. °स्तीह। ७ ग. झ. °ति एव°। ८ क. °तोन्यज्ञा°। ९ छ. °त्वप्र°। १० ग. यां वि°। ११ ग. झ. °तिपत्सि°। १२ ख. °पित्सि°। १३ क. °ति कः सं°। १४ घ. ङ. ज. °सितक्र°। १५ क. °तान भि° १६ क. °हारयो°। १७ ख. °कालीनान्वि°। १८ क. °मुखान्बाह्या°। १९ क. °व्यावर्तबु°। २० घ. ङ. ज. झ. °थाना°। २१ क, °त्मव्यव°। २२ क. घ. ज. °हारयो°।

नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥१३॥
चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः ।

---

त्तः संस्तथाऽन्तश्चित्तो मनोरथादिलक्षणानित्येवं कल्पयति । प्रभुरीश्वर आत्मेत्यर्थः ॥ १३ ॥

स्वप्नवच्चित्तपरिकल्पितं सर्वमित्येतदाशङ्क्यते । यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योऽन्यपरिच्छेद्यत्वमिति सा न युक्ताऽऽशङ्का । चित्तकाला हि येऽन्तस्तु चित्तपरिच्छेद्याः नान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः । कल्पनाकाल एवोपलभ्यन्त इत्यर्थः । द्वयकालाश्च भेदका-

---

न्कल्पयित्वा पुनर्बहिर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः । एतदुक्तं भवति । यथा लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्यं चिकीर्षुरादौ व्यवहारायोग्यां व्यक्तिं बुद्धावाऽऽविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां संपादयति । तथैवायमादिकर्ताऽपि मायालक्षणे स्वचित्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान्स्रष्टव्यपदार्थान्प्रथमं सिसृक्षिताकारेणान्तर्विभाव्य पश्चाद्बहिः सर्वप्रतिपत्तृसाधारणरूपेण संपादयतीति कल्पनायां क्रमाधिगतिरिति ॥ १३ ॥

कल्पितानां कल्पनाकालादन्यस्मिन्काले सत्त्वाभावाज्जाग्रद्भावानां च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्नं तेषां मिथ्यात्वमित्याशङ्क्याऽऽह । **चित्तेति** । ये कल्पनाकालभाविनो भावा मनस्यन्तर्वर्तन्ते । ये च प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति । प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः । श्लोकव्यावर्त्यामाशङ्कां दर्शयति । **स्वप्नवदिति** । यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्यैवेष्यते । तथा जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मिथ्यैवेत्येतन्नाद्यापि निर्धारितमित्यत्र हेतुमाह । **यस्मादिति** । आत्माविद्याविवर्तेन चित्तेन तावदन्तर्विनिर्मिता मनोरथरूपा मनस्यन्तर्वर्तमाना बहीरज्जुसर्पाद-

---

१ छ. °चित्तक° । २ ङ. °त्येवं त° । ३ क. झ. °शङ्कते । ४ क. °नर्व्य° । ५ छ. झ. °टं का° । ६ ख. ग. घ. ज. झ. °हारयो° । ७ ज. °चित्तना° । ८ क. °पत्तिसा° । ९ घ. °नात्का° । १० क. °पन्ने° । ११ घ. °लविभा° १२ घ. °हारायो° । १३ क. °षवस्तु° । १४ छ. °पि तत्त्वे तु त° । १५ झ. °न्तार्निर्मि° । १६ ङ. °नोरू° ।

# कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः॥१४॥

**ला अन्योन्यपरिच्छेद्याः। यथाऽऽगोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते। तावानयमेतावान्स इति परस्परपरिच्छेद्यपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकालाः। अन्तश्चित्तकाला बाह्याश्च द्वयकालाः कल्पिता एव ते सर्वे। न बाह्यो द्वयकालत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अत्रापि हि स्वप्नदृष्टान्तो भवत्येव॥१४॥**

यश्च ते चित्तेनैव परिच्छिद्यन्ते। ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते। तैः सह वैलक्षण्यं मनसो बहिर्जाग्रद्दृश्यमानानां भावानामन्योऽन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञागोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः। श्लोकाक्षरैरुत्तरमाह। **सानेति**। ये मनस्यन्तर्मनोरथरूपाभावास्ते चित्तकाला भवन्तीत्यत्र चित्तकालत्वं विशदयति। **चित्तेत्यादिना**। वाच्यार्थमुक्त्वा विवक्षितार्थमाह। **कल्पनेति**। द्वितीयपादमवतार्य व्याकरोति। **द्वयेति**। ये मनसो बहिरुपलभ्यन्ते ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति व्युत्पत्तेः। ततश्चान्येन पूर्वेणान्येन चापरेण परिच्छेद्या भिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमाना इत्यर्थः। प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति। **यथेति**। आगोदोहनं गोदोहनपर्यन्तमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञाशेषत्वेनाभिज्ञोदाहरणीया यावता कालेनावच्छिन्नो वर्तते तावता कालेनावच्छिन्नो गोदोहनं निर्वर्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तस्य दर्शयति। **यावदिति**। यावता कालेनायं घटोऽर्थक्रियां निर्वर्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेष तिष्ठतीत्युदाहरणान्तरमाह। **तावानिति**। परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्त्य निर्वृणोत्येतावता कालेनावच्छिन्नः स तिष्ठतीत्यपरमुदाहरणमाह। **एतावानिति**। उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य च परिच्छेदकत्वम्। तथा च ते सर्वे भावा बहिर्दृश्यमाना द्वयकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः। तृतीयपादं व्याचष्टे। **अन्तरिति**। चतुर्थपादार्थमाह। **नेत्यादिना**। बाह्यो जाग्रद्दृश्येषु बाह्यपदार्थेषु व्यवस्थितो द्वयकालत्वेन कालद्वयावच्छेदेन कृतः प्रत्यभिज्ञायमानत्वरूपो विशेषोऽन्यहेतुको न भवति। कल्पितेऽपि तथाविधविशेषसंभवादित्यत्र दृष्टान्तमाह। **अत्रापि हीति**।

१ क. बाह्यः कालद्वयत्व°। २ छ. °रिच्छेद्य°। ३ ज. °न्ते। हि°। ४ क. °ज्ञानगो°। ५ क. येन। ६ क. °लत्वे वि°। ७ झ. येन-। ८ ख. ग. ज. झ. °न्ते भे°। ९ घ. षां त°। १० ज. न वा प°। ११ घ. °रिच्छिद्य भि°।

**अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः ।**
**कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥ १५ ॥**
**जीवं कल्पयते पूर्वं ततो भावान्पृथग्विधान् ।**

---

यदप्यन्तर[1]व्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा[2] बहिश्चक्षुरादीन्द्रियान्तरे[3] विशेषो नासौ भेदानामस्तित्वकृतः स्वप्नेऽपि तथा दर्शनात् । किं तर्हीन्द्रियान्तरकृत एव[4] । अतः कल्पिता एव जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम् ॥ १५ ॥

बाह्याध्यात्मिकानां[5] भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायां[6]

---

यद्यपि सर्वं जाग्रद्भेदजातं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटः सिद्ध्यति । स्वप्ने सर्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः ॥ १४ ॥

स्वप्नजागरितयो[7]रुभयोरपि मिथ्यात्वे स्फुटा[8]स्फुटावभासविभागानुपपत्तेर्ना[9]विशेषेण मिथ्यात्वमित्याशङ्क्याह । **अव्यक्ता इति**[10] । ये मनस्यन्तर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्वे मनःस्पन्दे[11]नमात्रत्वेन कल्पिताः । मिथ्यैवान्तर्बहिरिन्द्रियभेदनिमित्तः स्फुटत्वास्फुटत्वविशेषः । न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते । मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः । श्लोकाक्षराणि व्याकरोति[12] । **यदपीत्यादिना** । मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वम् । तत्र हेतुमाह । **मन इति** । चक्षुरादिग्राह्यत्वेन मनसो बहिर्भावानां स्फुटत्वं दृष्टं तदेषाममिथ्यात्वकृतमिति शङ्कां वारयति । **नासाविति** । सर्वसंप्रतिपन्नमिथ्यात्वेऽपि स्वप्ने स्फुटत्वास्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वममिथ्यात्वं[13] वा प्रयोजयितुं प्रभवतीत्याह । **स्वप्नेऽपीति** । अयं विशेषस्तर्हि केन सिद्ध्यतीत्याशङ्क्य चतुर्थपादार्थमाह । **किं तर्हीति** । मनोमात्रसंबन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वम् । बहिर्भावानां[14] तु चक्षुरादिबहिरिन्द्रियसंबन्धाद्युक्तं स्फुटत्वं तदेष विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः । स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि संभवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति । **अत इति** ॥ १५ ॥

भवतु सर्वस्य कल्पितत्वम् । सा पुनः सर्वकल्पना केन द्वारेणेत्याशङ्क्याह । **जीवमिति** । आत्मा हि सर्वं मायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति[15] ।

---

१ क. यद्यप्य° ख. च. योप्य° छ. येप्य° । २ ङ. च । ३ ख. °न्तरग्राह्याणां वि° । ४ क. एवान्तः क° । ५ ख. घ. ङ. छ. ज. °ख्यानामाध्या° । ६ °नायाः किं । ७ ग. घ. ङ. च. झ. °योर° । ८ ग. ज. °टाव° । ९ क. °पत्तेनावि° । घ. पत्तेर्नो विशेषण° । १० ङ. °ति । म° । ११ ग. °न्दमा° । १२ छ. °ति । येऽपी° । १३ ङ. °त्वं प्र° । १४ घ. ज. °नां च° । १५ ख. घ. °यते । त° ।

**बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः॥ १६॥**

किं मूलमिति। उच्यते। जीवं हेतुफलात्मकम्। अहं करोमि मम सुखदुःखे इत्येवं लक्षणम्। अनेवंलक्षण एव शुद्ध आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम्। ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान्भावान्बाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते। योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथा स्मृतिर्भवति स इति। अतो हेतुकल्पनाविज्ञानात्फलविज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानं तदर्थक्रियाकारकतत्फलभेदविज्ञानानि। ते-

**तत इति**। तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवभावमापद्यते। तद्द्वारेण पुनर्नानाविधान्भावान्निर्मिमीते। ज्ञानस्मृतिवैषम्यात्तत्कल्प्येषु भावेषु वैषम्योपपत्तिरित्यर्थः। श्लोकव्यावर्त्यं प्रश्नमुत्थापयति। **बाह्येति**। पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखं दुःखं ज्ञानं रागश्चेत्येवमादयस्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति। बाह्यान्निमित्तीकृत्याध्यात्मिका भवन्ति। तानपि निमित्तीकृत्येतरे जायन्ते। तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यम्। निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः। श्लोकाक्षरयोजनया परिहरति। **उच्यत इति**। हेतुफलात्मकमित्युक्तमेव व्यनक्ति। **अहमिति**। हेतुफलभावविकलं परिशुद्धमात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति। **अनेनैवमिति**। आरोपस्याधिष्ठानापेक्षाऽस्तीत्यत्र दृष्टान्तमाह। **रज्ज्वामिवेति**। द्वितीयतृतीयपादौ विभजते। **तत इति**। तादर्थ्येन प्रथमं कल्पितस्य भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः। यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य तत्र कल्पनाविशेषो विशेषहेतुव्यतिरेकेण न संभवतीति शङ्कते। **तत्रेति**। चतुर्थपादेनोत्तरमाह। **उच्यत इति**। कल्पितो विशिष्टरूपेणेति शेषः। अधिकृतः स्वामित्वेन संबद्ध इत्यर्थः। इति शब्दः श्लोकाक्षरयोजनासमाप्तिद्योतनार्थः। प्रकृतकल्पनामेव प्रपञ्चयति। **अत इत्यादिना**। सत्यन्नपानाद्युपयोगे तृप्त्यादि भवति। असति न भवतीत्यन्वयव्यतिरेकरूपान्न्यायाद्भोजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यते।

१ च. °विध्यस्त°। २ ख. घ. ङ. छ. ज. सुखं दुःखमित्ये° च. सुखेत्ये°। ३ क. अनेनैवं°। ४ च. °ति स य°। ५ घ. स्तथा। ६ क. ग. घ. छ. झ. °त्कल्पेषु। ७ ग. घ. ङ. छ. ज. बाह्यात्ममिति। झ. बाह्याध्यात्मिकानामिति। ८ क. सुखदुः। ९ ज. °रं नै°। १० ज. °त्तनै°। ११ घ. °यात्र। १२ ख. °लं च व°। १३ क. °शुद्धात्म°। १४ ज. तत्र। १५ क. °स्य क°। १६ ग. °शेषहे°। १७ घ. विशेषरू°। १८ ङ. °ति विशे°। १९ ग. छ. झ. °कृत्वा स्वा°। २० क. बन्धेन संबद्ध°। २१ क. °रपरयो° ग. घ. °रस°। २२ ख. छ. °दि संभ°। २३ ख. °पाभ्यां यद्भो° छ. °पाद्भो°।

**अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।**

भ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानी त्येवं बाह्यानाध्यात्मिकांश्चे-तरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥ १६ ॥

तत्र जीवकल्पना सर्वकल्पनामूलमित्युक्तं सैवं जीवकल्पना किं निमित्तेति दृष्टान्तेन प्रतिपादयति। यथा लोके स्वेन रूपेणानिश्चिताऽनवधारिता एवमेवेति रज्जुर्मन्दान्धकारे किं सर्प उदकधारा दण्ड इति वानेकधा विकल्पिता भवति पूर्वं स्वरूपानिश्चयनिमित्तं । यदि हि पूर्वमेव रज्जुः

ततस्तृप्त्यादिकं फलमिति कल्पनाविज्ञानं जायते । ततोऽपरेद्युरुक्तयोरुभयोरपि हेतुफलयोः स्मृतिरुद्भवति । ततश्च फलसाधनसमानजातीये कर्तव्यताविज्ञानम् । ततश्चाभिलषिततृप्त्यादिफलार्थत्वेन पाकादिक्रिया तत्कारकं तण्डुलादि तत्फलान्ननिष्पत्त्यादीनि विशेषविज्ञानादीनि भवन्ति । ततो हेत्वादिस्मृतिः । तदस्तदनुष्ठानम् । ततश्च फलम् । इत्यनेन क्रमेण मिथो हेतुहेतुमत्तया कल्पना भवतीत्यर्थः । प्रकृतां कल्पनामुपसंहरति । एवमिति ॥ १६ ॥

इदानीं जीवकल्पनानिमित्तं निरूपयति । अनिश्चितेति । श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्तयति । तत्रेति । पूर्वश्लोकः सप्तम्यर्थः । जीवकल्पनाया नित्यत्वायोगात्सनिमित्तत्वस्य वक्तव्यत्वात्तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः । असवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूतापि कल्पना नावकल्प्यत इत्याशङ्क्यते। सैवेति। उत्तरत्वेन श्लोकाक्षराण्यवतार्य व्याचष्टे। दृष्टान्तेनेति। स्वप्रसाधारणं रूपं रज्जुत्वं तेनेति यावत् । अनवधारितत्वमेव स्फोरयति। एवमेवेति। रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः। उक्तावधारणाराहित्ये कारणं सूचयति। मन्देति। पूर्वं रज्जुस्वरूपनिश्चयात्प्रागवस्थायामित्यर्थः। सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति। स्वरूपेति । एतदेव व्यतिरेकद्वारा विवृणोति । यदि हीति । देवदत्तस्य हस्तोद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्तिन्यपि रज्जौ स्वरूपेण निश्चितेनासौ युक्तस्तथा च रज्ज्वज्ञानादेवैवं स भवतीत्यर्थः। उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिदधानश्चतुर्थपादार्थमाह । एवं इति । हेतुफलादीत्यादिशब्देन

१ छ. °तिश्च। २ ख. घ. ङ. ज. °ज्ञानमित्ये°। ३ क. नानि तेभ्यस्ततस्मृतिस्ततस्मृतिश्च पुनस्तज्ज्ञानानी°। ४ ज. झ. °नामाध्या°। ५ छ. °व क°। ६ झ. °तिचाने°। ७ च. °दि पु°। ८ क. °ज्जुः सर्पेण। ९ क. °तस्तुष्ट्यादि°। १० घ. ङ. ज. झ. °रुभ°। ११ क. °धनस°। १२ क. °त्वे घा°। १३ क. °रकत°। छ. रकारान्तरत°। १४ ख. °लान्यन्नानि°। १५ ख. घ. ङ. छ. ज. °नानि। १६ छ. ज. °तुम°। १७ छ. °निमित्तत्वा°। १८ ग. .शङ्क्यते। १९ ग. घ. ङ. ज. झ. °स्ताव°। २० घ. °दिक°। २१ ङ. ज. झ. °ज्जुरू°। २२ क. रज्जुज्ञा°। २३ क. °व भ°। २४ क. छ. °मिसंदधा°। २५ घ. ङ. एवमिति। ज. एवमपि।

सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥
निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते।

स्वरूपेण निश्चिता स्यात्। न सर्पादिविकल्पोऽभविष्यत्। यथा स्वहस्ताङ्गुल्यादिषु। एष दृष्टान्तः। तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदां सिद्धान्तः ॥ १७ ॥

रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्वसंसारधर्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्यालोकक-

कर्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति। स्वेनेति। अनारोपितेनेति यावत्। विज्ञप्तेर्विशुद्धत्वं जन्मादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वं चेत्यर्थः। तन्मात्रत्वमयुक्तं सामान्यविशेषभावादित्याशङ्क्याह। सत्तेति। न च तत्रान्यदस्ति सुखमिति मत्वा विशिनष्टि। अद्वयेति। सच्चिदानन्दाद्वयात्माविद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति। इत्येष इति। अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते यत्र हि द्वैतमिव भवतीत्याद्याश्च द्वैततत्प्रतिभासयोर्मृषात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः ॥ १७ ॥

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति। निश्चितायामिति। रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्वथा निवर्तते रज्जुमात्रं चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवात्मतत्त्वं परिशिष्यते। तस्मादात्माऽविद्याविजृम्भिता जीवकल्पनेत्यर्थः। दृष्टान्तभागं व्याचष्टे। रज्जुरिति। तद्वदित्यादि व्याकरोति। तथेति। सर्पस्यापि संसारात्मनो धर्मस्यात्मन्यारोपितस्यासत्त्वावेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एवाद्वितीयः शिष्यते। द्वैतं पुनः सर्वमेव व्यावृत्तं भवतीत्यर्थः। आत्मविनिश्चयमेव विशिनष्टि। आत्मैवेति। सर्वमिदमात्मैवेत्युक्तेः पूर्णत्वं तस्योच्यते पूर्वभाविना कारणेन संस्पर्शशून्योऽपूर्वः पश्चाद्भाविना कार्येण सम्बन्धविधुरोऽनपरमनन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसस्तस्यैव प्रत्यक्त्वमबाह्यत्वं कार्यकारणास्पृष्टमुभयकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह। सबाह्येति। विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थम्। जन्मादिसम्बन्धाभावे कारणमविद्यासम्बन्धराहित्यं दर्शयति। अभय इति।

१ क. °ष्यत्। स यथा स्व°। २ ज. झ. च. दिष्वेवं द°। ३ क. तद्धे°। ४ च. °णःस्वे°। ५ क. शेषाभा°। ६ घ. °बाल°। ७ ख. ङ. छ. °त्तत्र तत्रो°। ८ क. °समानयो°। ९ ज. °न्ते ना°।

रज्जुरे[1]वेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥
प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः ।
मायैषा तस्य देवस्य यया[2] संमोहितः स्वयम् ॥१९॥
प्रा[3]ण इति प्रा[4]णविदो भूतानीति च तद्विदः ।

तात्मविनिश्चयः । आत्मैवेदं सर्वं अपूर्वोऽनपरोऽनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजोऽजरोऽमरोऽमृतोऽभय एक एवाद्वय इति ॥ १८ ॥

यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति । उच्यते । शृणु मायैषा तस्यात्मनो देवस्य । यथा मा[5]याविना विहि[6]ता माया गगनमति[7]विमलं कुसुमितैः स[8]पलाशैस्तरुभिराकीर्णमिव करोति तथेयमपि देवस्य माया[9] ययाऽयं स्वयमपि मोहि[10]त इव मोहितो भवति । मम माया दुरत्ययेत्युक्तम् ॥ १९ ॥

प्राणः प्राज्ञो [11]बीजात्मा तत्कार्यभेदा हीतरे स्थित्यन्ताः । अन्ये च

न खल्वविद्या तत्र कारणत्वेन सम्बन्धमनुभवति । तस्य पूर्णत्वेन कारणानपेक्षत्वादित्याह । **एक इति** । द्वैताद्वैतव्यावृत्त्यर्थमवधारणं न विद्यायाः । निराश्रयत्वोपपत्तेः । आश्रयान्तरस्य चासत्त्वात् । तत्रैव सा प्रविशतीति चेत्सत्यम् । अविद्वदृष्ट्या तस्यास्तत्र प्रवेशोऽपि वस्तुदृष्ट्या नासौ तस्मिन्प्रवेष्टुं प्रभवतीत्याह । **अद्वय-इति** ॥ १८ ॥

आत्मनो द्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायाप्रतिपत्त्या प्रत्यवतिष्ठते । **प्राणादिभिरिति** । सिद्धान्ती स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह । **मायेति** । चोद्यभागं विभजते । **यदीति** । उत्तरार्धमुत्तरत्वेन व्याकरोति । **उच्यत इति** । मायामेव दृष्टान्तेन स्पष्टयति । **यथेति** । तामेव मायां कार्यद्वारा स्फोरयति । **ययेति** । यथा लौकिको मोहितो मोहपरवशो दृश्यते तथाऽयमात्मा स्वयमेव मायासंबन्धान्मोहितो भवति । अतो मोहद्वाराऽऽत्मन्येव मायाविगतिरित्यर्थः । मायाया मोहहेतुत्वं भगवतापि सूचितमित्याह । **ममेति** ॥ १९ ॥

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति । **प्रा[12]ण इ[13]ति** । प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा[14] स जगतो हेतुरिति

१ क. रेतैः क° । २ ख. घ. ङ. ज. °यायं संमो° । ३ घ. च. ज. प्राणा । ४ छ. प्राणावि° । ५ छ. ज. मायां वि° । ६ क. °हितमा° । ७ झ. °तिनिर्मलं । ८ च. सफलप° । ९ ख. घ. ज. °याऽयम° । च. °या सस्व° । १० क. °हितो भ° । च. हितामिव । ११ छ. जीवात्मा । १२ ग. घ. ज. प्राण इतीति । १३ ङ. झ. इतीति । १४ घ. ङ. ज. वा ज° ।

**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥**
**पादा इति पादविदो विषया इति च तद्विदः ।**

सर्वे लौकिकाः सर्वप्राणिपरिकल्पिता भेदा रज्ज्वामिव सर्पादयः । तच्छून्ये आत्मन्यात्मस्वरूपानिश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः । प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजनत्वाद्यत्नो न कृतः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥२६॥ २७ ॥ २८ ॥

प्राणविदो हैरण्यगर्भीया वैशेषिकादयश्च[3] कल्पयन्ति । तदिदं कल्पनामात्रम् । स्वतन्त्रस्य हिरण्यगर्भस्य[4] सर्वजगद्धेतुत्वे मानाभावात् । पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्तटस्थेश्वरवादस्य[5] च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः । कल्पनान्तरं दर्शयति । **भूतानीति[6] चेति** । पृथिव्यप्तेजोवायवस्तत्त्वानि[7] तानि च चत्वारि भूतानि जगत्कारणानीति लोकायतिकास्तदपि कल्पनामात्रम् । न हि भूतानि स्वतःसिद्धानि जडत्वविरोधात् । नापि परतः सिद्धानि । स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगाद्वह्निगतौष्ण्यस्य वह्निविषयत्वादर्शनात् । अतो भूतानि जगत्कर्तॄणीति कल्पनैवेत्यर्थः । सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति सांख्याः तदपि कल्पनामात्रम् । साम्येन[8] स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात् । वैषम्यभजनस्य[9] च निर्हेतुकत्वे सदा[10] तदापातात् । सहेतुकत्वे[11] हेतोर्नित्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह । **गुणा इतीति[12]** । कल्पनान्तरमाह । **तत्त्वानीति[13][14] चेति** । आत्माऽविद्या शिव इति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्वजगत्प्रवर्तकानीति शैवा मन्यन्ते तदपि कल्पनामात्रम् । आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे[15] तत्त्वानां त्रित्वव्याघातादित्यर्थः ॥ २० ॥

एकस्यात्मनो विश्वादयः[16] पादाः सर्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रम् । निरंशस्यात्मनोंऽशभेदानुपपत्तेरित्याह[17] । **पादा इतीति[18]** । वात्स्यायनप्रभृतीनां कल्पनां कथयति । **विषया इतीति[19]** । शब्दादयो[20] विषया भूयो भूयो भुज्यमानास्तत्त्वमिति[21] विभ्रममात्रम् । विषस्य विषयाणां च दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति विषयाः[22]

१ क. °त्मनात्म° । २ झ. °त्वात्प्रसिद्धपदार्थत्वाच्च यत्नो° । ३ ङ. °श्च विक° । ४ घ. °स्य ज° । ५ घ. °गात्ताटस्थ्येश्व° । ६ छ. ति पृ° । ७ ग. झ. °नि चत्वा° । ८ ख. घ. °म्येनावस्थि° । ९ ख. °भवन° । १० ग. °दापा° । ११ ग. झ. °हेतो° । १२ ख. छ. इति । १३ ग. घ. ङ. झ. °त्त्वानि चे° । १४ छ. °ति आ° । १५ छ. झ °ल्यप्र° । १६ क. °यः स° । १७ ख. °पत्त्या पादानुपपत्ते° । १८ ख. छ. इति । १९ छ. इति । २० ख. °यो भू° । २१ छ. °ति भ्र° । २२ ग. झ. विषयः ।

लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥
वेदा इति च वेदविदो यज्ञा इति च तद्विदः ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥२२॥
सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ।

---

स्मरणादपि इति। विषयानुसंधानस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरि[2]त्यर्थः । भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिकाः । तदपि कल्पनामात्रम् । स्थानभेदेन त्रित्वे तदानन्त्यस्य दु[3]रुत्तरत्वात्स्वातन्त्र्यस्य चासिद्धत्वादित्याह । लोका इ[4]तीति । अग्नीन्द्रादयो देवास्त[5]त्तत्फलदातारो नेश्वरस्तथेति देवताकाण्डीयाः । तदपि कल्पनामात्रम् । अस्मदादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशे[6]षाभावप्रसङ्गात् । स्वातन्त्र्ये[7]णोपकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात्तत्प्रसादस्याकिंचित्करत्वादित्याह । देवा इति चेति ॥ २१ ॥

ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठका वदन्ति । तदपि कल्पनामात्रम् । न हि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यन्ते । क्रमवतामेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात् । क्रमश्चोच्चारणोपलब्ध्योरन्यतरगतो वर्णेष्वारोप्यते । तथा च तथाविधक्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह । वेदा इति। ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम्। यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकैकस्मिन्यज्ञविज्ञानाभावात्समुदायस्यावस्तुत्वादित्याह । यज्ञा इति चेति । भोक्तैवात्मा न कर्तेति सांख्याः । तत्र भोगो यदि विक्रिया स्वीक्रियेत तर्हि कथं नानित्यत्वादिप्रसङ्गः स्वभावत्वे सदा स्यादिति विषयसंनिधौ भोक्तृत्वं भ्रान्तिरेवेत्याह । भोक्तेति चेति । सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते। तदपि न। मधुरादिरसव्यञ्जनादेस्तद्दैवान्यथात्वदर्शनादै[12]करूप्यासंभवादित्याह । भोज्यमिति चेति ॥ २२ ॥

आत्मा सूक्ष्मोऽणुपरिमाणः स्यादिति केचित्। तन्न। युगपदशेषशरीरव्यापिवेदनानुसंधानासिद्धेरि[14]त्याह । सूक्ष्म इतीति । स्थूलो देहोऽहंप्रत्ययादात्मेति लोकायतभेदः । तच्चै[15] न । मृतसु[16]षुप्तयोरपि संघाता[17]विशेषाच्चैतन्यप्रसङ्गात् । एकैकस्य च भूतस्य

---

१ ख. घ. ङ. च. ज. °ति वे°। २ ग. छ. °पत्तिरि°। ३ छ. दुरुत्तत्वा°। ४ ख. छ. इति। ५ ख. °स्तत्फ°। ६ क. °शेषप्रा°। ७ छ. °त्र्ये परोप°। ८ ग. घ. ङ. ज. झ. इतीति। ९ ग. झ. °ति। भो°। १० ग. घ. ङ. ज. झ. °दि क्रि°। ११ छ. °यन्ते त°। १२ ङ. छ. ज. °दैवरू°। १३ ग. घ. °त्वे°। १४ छ. °रित्यर्थः। १५ छ. च मू°। १६ ङ. °सुप्त°। १७ घ. °तादिवि°।

**मूर्त इति मूर्तविदो अमूर्त इति च तद्विदः ॥ २३ ॥**
**काल इति कालविदो दिश इति च तद्विदः ।**
**वादा इति वादविदो भुवनानीति तद्विदः ॥ २४ ॥**
**मन इति मनोविदो बुद्धिरिति च तद्विदः ।**

चैतन्यादर्शनात्संघातस्य चावस्तुत्वादित्याह। **स्थूल इति चेति** । मूर्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः । तदपि भ्रान्तिमात्रम् । अस्मदादिशरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वात् । लीलाविग्रहकल्पनं च विग्रहाभावे लीलाभावादयुक्तमित्याह । **मूर्त इति** । अमूर्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रम् । परमार्थो निःस्वभावश्चेति व्याघातादित्याह । **अमूर्त इति चेति** ॥ २३ ॥

कालः परमार्थ इति ज्योतिर्विदः । तच्च न । कालैक्ये मुहूर्तादिव्यवहारायोगात् । तन्नानात्वेऽपि न स्वातन्त्र्यम् । अन्यविषयत्वेन प्रतीतेः । उदयकाल इत्यादिना क्रियाधर्मत्वेन प्रतीतेः स्फुटत्वात् । न च क्रियाधर्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथा-कालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह । **काल इतीति** । स्वरोदयविदस्तु दिशः परमार्था इत्याहुः । तदपि भ्रान्तिमात्रम् । तद्विदामपि पराजयदर्शनादित्याह । **दिश इति चेति** । धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित् । तदपि कल्पनामात्रम् । ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासंभवात् । मन्त्रवादेऽपि कालदष्टो न वाति । अकालदष्टः स्वयमेवो[17]त्थास्यतीत्यभ्युपगमाद्व्यामोहमात्रमित्याह । **वादा इतीति** । भुवनानि चतुर्दश वस्तूनीति भुवनकोशविदः । तदपि कल्पनामात्रम् । तेषामदृष्टत्वात् । न च तेभ्यस्तद्दर्शनम् । तेषां मिथो विप्रतिपत्तिदर्शनादित्याह । **भुवनानीति** ॥ २४ ॥

मन एवात्मेति लोकायतभेदः । तदपि भ्रान्तिमात्रम् । तस्य स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः । अस्वातन्त्र्ये च घटवदनात्मत्वात्करणत्वाच्च दीपवदात्मत्वायोगादित्याह । **मन इति** । बुद्धिरेवात्मेति बौद्धाः । तेषामपि भ्रान्तिमात्रमेव । तत्सुषुप्ते व्यभिचाराद्वेद्यस्य च घटवदतिरिक्तवेद्यत्वादित्याह । **बुद्धिरिति** । चित्तमेव बाह्याकारशून्यं वि-

१ घ. च. छ. मनवि°। २ ङ. °तस्यात्र°। ३ ग. °स्यं च व°। ४ घ. ङ. ज. मूर्तिस्त्रि°। ५ छ. °दिवत्त°। ६ घ. °रीरं पा°। ७ ख. ग. घ. ङ. ज. झ. °लायोगाद°। ८ घ. ज. °मार्थतो निः°। ९ ग. °त्वे प्र°। १० ग. °तीते । उ°। ११ घ. °लावच्छि°। १२ घ. °यायां नि°। १३ ख. °मार्थ इ°। १४ छ. °वादर्शनात् । १५ ख. ग. घ. झ. °लदष्टो । १६ ख. ग. घ. ज. °लदष्टः । १७ छ. °मेवव्युत्था°। १८ ख. इति । १९ छ. °दृष्टार्थत्वा°। २० ख. °वचनेभ्य° । २१ घ. °नानीतीति । २२ ग. ङ. झ. °रात्वे°।

चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥ २५ ॥
पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥
लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः ।

---

ज्ञानम् । तदेवात्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषात्तुल्यं भ्रान्तित्वमित्याह । **चित्तमिति** । धर्माधर्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकाः । तदपि कल्पनामात्रम् । देशकालादिषु धर्माधर्मयोर्विप्रतिपत्तिदर्शनादित्याह । **धर्मेति** ॥ २५ ॥

प्रधानं मूलप्रकृतिः । महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्मेन्द्रियाणि । पञ्च विषयाः । मनश्चैकमिति षोडश विकाराः । पुरुषस्तु दृशिस्वभाव इति पञ्चविंशतिसङ्ख्याकः प्रपञ्चो वास्तवाविति साङ्ख्याः । तच्च कल्पनामात्रम् । पञ्चविंशतिविशेषणस्याव्यावर्तकत्वे वैयर्थ्याद्व्यावर्तकत्वे च व्यावर्त्यप्रमित्यप्रमित्योरनुपपत्तेरित्याह । **पञ्चविंशक इति** । पातञ्जलाः पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिपदार्था इति कल्पयन्ति । तदयुक्तम् । ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः । अनन्तर्भावे च घटवदनीश्वरत्वप्रसङ्गादित्याह । **षड्विंश इति चेति** । पाशुपतास्तु रागविद्यानियतिकालकलामायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते । तन्न । क्लेशत्वेऽपि रागाविद्ययोरवान्तरभेदवदस्मितादेरपि तद्भिन्नत्वेन सङ्ख्यातिरेकात्तस्य रागोपलक्षितत्वे तस्याप्यविद्योपलक्षितत्वेन न्यूनत्वापातादविद्यामाययोश्चैकत्वादवान्तरभेदे च नियतावपि तदुपपत्तेः सङ्ख्यातिरेकतादवस्थ्यम् । कालकलासु च तत्प्रसिद्धेरित्याह । **एकत्रिंशक इति** । *अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित् । तदपि न । वादिनां विवाददर्शनात् । विवादस्य चाज्ञानमूलकत्वादित्याह । **अनन्त इतीति** ॥ २६ ॥

लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः । तदपि विभ्रममात्रम् । लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्तुमशक्यत्वादित्याह । **लोकानिति** । दक्षप्रभृतयस्त्वाश्रमाः परमार्था इति समर्थयन्ते । तदसत् । वेषस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचत्वात्तन्मूलस्याश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगादसङ्गे चात्मनि तदसमवायादित्याह । **आश्रमा इतीति** । वै-

---

* अनन्तः पदार्थ इत्यादि रनन्त इत्यन्तो ग्रन्थः गपुस्तके—चेतीत्यस्य पश्चाद्दृश्यते ।

---

१ ग. °तुल्यभ्रा° । २ घ. °प्रसं° । ३ घ. °श्चोऽस्त्वि° । ४ ग. छ. झ. °तिः प° । ५ क. °ति विक° ६ घ. ञ. °ता रा° । ७ क. °न च शून्यता । ८ छ. इति ।

स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥ २७ ॥
सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।
स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा ॥२८॥
यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।

किंबहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं भावं पदार्थं दर्शयेद्यस्याचार्योऽन्यो वाप्त इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्य-

थाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति । तदप्ययुक्तम् । स्त्र्यादेः शब्दस्वभावत्वे सर्वादीनां त्रिलिङ्गत्वायोगादेकस्यानेकस्वभावत्वासंभवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह । स्त्रीपुंनपुंसकमिति । द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित् । तच्च न । परिच्छेदे क्वचिदपि ब्रह्मत्वायोगाद्वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह । परापरमिति ॥ २७ ॥

सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः । तदपि कल्पनामात्रम् । सतोऽसतश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाह । सृष्टिरित्यादिना । यथोक्तकल्पनानामधिष्ठानं सूचयति । सर्वे चेति । उदाहृतांश्चानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि[12] प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते नात्मनः कल्पितत्वम् । सर्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः । प्राणादिश्लोकेषु प्राणशब्दार्थमाह । प्राण इति । तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह । तत्कार्येति । अन्तिमपदार्थं स्फुटयति । अन्य इति । कुलधर्मो[14] ग्रामधर्मो देशधर्मश्चेत्येते सर्वशब्देन गृह्यन्ते । तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति । रज्ज्वामिति । आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह । तच्छून्य इति । किमिति समुदायार्थः श्लोकानामुच्यते । श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याऽऽह । प्रत्येकमिति ॥ २८ ॥

लौकिकानां परीक्षकाणां च कतिपयकल्पनाभेदाननुदाहृत्यानन्त्यादशेषतस्तेषामुदाहर्तुमशक्यत्वं दृष्ट्वा सङ्क्षेपमात्रमाचष्टे । यं भावमिति । पादत्रयं विभजते । किं ब-

१ ङ. °क्तं चान्यं । २ ङ. वा यं । ३ ख. घ. ज. °न्यो वेत्यमि° । ४ क. वा सुत ; छ. वा प्राप्त । ५ छ. सन्तं ; ज. सततं । ६ ज. °रणस्तु । ७ घ. ङ. छ. ज. °सकश° । ८ ज. °यति । त° । ९ ग. घ. ङ. ज. °स्य सद्भा° । १० °क. नाधि° । ११ क. °तानु° । १२ ङ. °पि इह प्र° । १३ ङ. ज. °न्तिमं प° । १४ ग. °र्मो दे° । १५ ग. स्फुटयति । १६ ख. छ. °मत्वयो° । १७ ग. °दा भेदानु° । १८ घ. °नन्तास्ते° । १९ क. °षामिहाह° । २० ख. घ. ङ. ज. °मात्रं व्याच° ।

**तं चावति स भूत्वाऽसौ तद्ग्रहः समुपैति तम् ॥ २९ ॥**
**एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।**

त्ययमहमिति वा ममेति वा तं च द्रष्टारं सभावोऽवति यो दर्शितो भावो स भूत्वा रक्षति । स्वेनात्मना सर्वतो निरुणद्धि । तस्मिन्ग्रहस्तद्ग्रहस्तदभिनिवेशः । इदमेव तत्त्वमिति स तं गृहीतारमुपैति । तस्यात्मभावं निगच्छतीत्यर्थः ॥ २९ ॥

एतैः प्राणादिभिरात्मनोऽपृथग्भूतैरपृथग्भावैरेष आत्मा रज्जुरिव सर्पादिविकल्पनारूपैः पृथगेवेति लक्षितोऽभिलक्षितो निश्चितो मूढैरित्यर्थः । विवेकिनां तु रज्ज्वामिव कल्पिताः सर्पादयो नात्मव्यतिरेकेण प्राणादयः सन्तीत्यभिप्रायः । इदं सर्वं यदयमात्मेति श्रुतेः । एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामात्मानं च केवलं नि-

---

ह्नुनेत्यादिना । तमेव भावं विशिनष्टि । **यो दर्शित इति** । स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह । **असाविति** । साधकपुरुषतादात्म्यमापद्येत्यर्थः । रक्षणप्रकारं प्रकटयति । **स्वेनेति** । साक्षादसाधारणरूपत्वेन तत्रैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः । चतुर्थपादं व्याचष्टे । **तस्मिन्निति** । एतेनान्यत्र प्रवृत्तिनिरोधे हेतुरुक्तस्तर्हि प्राणादीनामात्मवदेव तात्त्विकत्वं प्राप्तमित्याशङ्क्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह । **एतैरिति** ॥ २९ ॥

उक्तज्ञानस्तुत्यर्थमाह । **एवमिति** । पूर्वार्धं व्याकरोति । **एतैरिति** । कल्पितानामधिष्ठानातिरेकेण सत्तास्फुरणयोरभावात्तद्द्वारेणात्मनि भेददर्शनमविवेकिनामस्तु । तदन्येषां कथमुपलब्धिरित्याशङ्क्याऽऽह । **विवेकिनान्त्विति** । प्राणादीनामात्मातिरेकेणासत्त्वे प्रमाणमाह । **इदमिति** । उत्तरार्धं योजयति । **एवमिति** । तत्त्वेनात्मवेदनोपायं सूचयति[12] । **तत्त्वेनेति** । स्वप्नदृश्यवज्जाग्रद्दृश्यानां मिथ्यात्वसाधको दृश्यत्वादिहेतुरत्र युक्तिरित्युच्यते । यथोक्तविज्ञानवान्वेदकिङ्करो न भवति[13] किं तु स यं वेदार्थं ब्रूते स एव[14] वेदार्थो भवतीत्यर्थः । विभागतो वेदार्थव्याख्यानमभिनयति । **इदमि-**

---

१ झ. °थग्भावैरपृथग्भूतैरे° । २ छ. °तोमू; ज. झ. °तो नि°; क. °तोऽप्यलक्षितो नि° । ३ क. °वं पद्मा° । ४ घ. ङ. झ. °मापद्य । ५ ग. घ. ङ. ज. झ. °स्य वा । ६ ख. ग. छ. °ति ॥ २९ ॥ ए° । ७ घ. ङ. °स्मत्वादे° । ८ क. °त्वान्नैव° । ९ ख. ग. छ. °ति । उ° । १० क. सत्त्वात्स्फु° । ११ झ. छ. °मात्मव्यति° । १२ ख. छ. °ति । श्रुतिति इति । १३ छ. किंत्वसौ यं । १४ ग. छ. झ. °तदर्थो ।

रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै । आ-
काशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥६॥
नाऽऽकाशस्य घटाकाशो विकारावयवौ यथा ।

कथं पुनरात्मभेदनिमित्त इव व्यवहार एकस्मिन्नात्मन्यविद्याकृत उपपद्यत इति । उच्यते । यथेहाकाश एकस्मिन्घटकरकापवरकाद्याकाशानामल्पत्वमहत्वादिरूपाणि भिद्यन्ते तथा कार्यमुदकाहरणधारणशयनादिसमाख्याश्च घटाकाशकरकाकाश इत्याद्यास्तत्कृताश्च भिन्ना दृश्यन्ते । तत्र तत्रै वै व्यवहारविषय इत्यर्थः । सर्वोऽयमाकाशे रूपादिभेदकृतो व्यवहारो न परमार्थ एव । परमार्थतस्त्वाकाशस्य न भेदोऽस्ति । न चाऽऽकाशभेदनिमित्तो व्यवहारोऽस्त्यन्तरेण परोपाधिकृतं द्वारं यथैतत् । तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निरूपणांत्कृतो बुद्धिमद्भिर्निर्णयो निश्चय इत्यर्थः ॥ ६ ॥

ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार

अद्वैतस्य श्रुत्यादिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूषयति । रूपेति । श्लोकव्यावर्त्यामाशङ्कामाह । कथमिति । यथात्मभेदवादे तद्भेदनिमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवाऽऽत्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपपद्यते । तथा च विमता जीवास्तत्त्वतो भिद्यन्ते भिन्ननामकत्वाद्भिन्नकार्यकरत्वाद्भिन्नरूपत्वाद्घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः । घटाकाशादिष्वनैकान्तिकत्वं विवक्षित्वा श्लोकाक्षराणि व्युत्पादयति । उच्यत इत्यादिना । शयनादिसमाख्याश्च भिद्यन्त इति संबन्धः तत्कृताश्चेत्यत्र तच्छब्देन विकल्पितो घटाकाशभेदो गृह्यते । चकारोऽवधारणार्थः । घटाकाशादीनामुक्तहेतुत्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्वमित्याशङ्क्याऽऽह । सर्वोऽयमिति । उक्तेऽर्थे तृतीयं पादं विभजते । न चेति । परोपाधिशब्देन घटकरकादिरुच्यते । दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे । यथैतदित्यादिना ॥ ६ ॥

घटाकाशादीनां विपक्षत्वाभावमाशङ्क्य परिहरति । नेत्यादिना । घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात्तत्रापि भेदस्य तात्त्विकत्वान्न विपक्षतेति श्लोकस्य व्यावर्त्यं चोद्यमुत्थापयति । नन्विति । आकाशस्य निर्विकारत्वं निरवयवत्वं च

१क. °त्तव्य°। २ घ. ज. °रणादि श°। ३ क. °माश्च दृ°। ४ घ. ङ. छ. ज. तत्रैत्र व्य°। ५ च. झ. °त्र व्य°। ६ क. °काशरू°। ७ च. °दिकृ°। ८ च. °र्थत ए°। ९ छ. °काशे भे°। १० च. झ. °ण्ण कृताबु°। ११ छ. °त्या वि°। १२ ग. छ. झ. °दि भेदव्य°। १३ ग. छ. झ. °त्वाच्च घट°। १४ क. क्षितत्वात्। श्लो°। १५ ख. ग. घ. ङ. °दिभिद्यत इ°। ज. °दिभिर्भिद्य°। १६ ग. विकल्पतो। १७ घ. °टाद्याका°। १८ ख. ग. ङ. छ. ज. °तुमत्त्वे वि°। १९ ङ. ज. °तीयपा°। २० ग. झ. °ति अन्तरेणोप°। २१ ज. °कात्वं च लो°।

**नैवात्मनः सदा जीवो विकारावयवौ तथा ॥७॥**
**यथा भवति बालानां गगनं मलिनं मलैः ।**

---

इति । नैतदस्ति । यस्मात्परमार्थाकाशस्य घटाकाशो न विकारः । यथा सुवर्णस्य रुचकादिर्यथा वाऽपां फेनबुद्बुदहिमादिः । नाप्यवयवो यथा वृक्षस्य शाखादिः । न तथाऽऽकाशस्य घटाकाशो विकारावयवौ यथा तथा नैवाऽऽत्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्वदा यथोक्तदृष्टान्तवन्न विकारो नाप्यवयवः । अत आत्मभेदकृतो व्यवहारो मृषैवेत्यर्थः ॥ ७ ॥

यस्माद्यथा घटाकाशादिभेदबुद्धिनिबन्धनो रूपकार्यादिभेदव्यवहारस्तथा देहोपाधिजीवभेदकृतो जन्ममरणादिव्यवहारस्तस्मात्तत्कृतमेव क्लेशकर्मफलमलवत्त्वमात्मनो न परमार्थत इत्येतमर्थं दृष्टान्तेन प्रतिपि-

---

लोकसिद्धं गृहीत्वा परिहरति । नैतदस्तीति । तत्र वैधर्म्योदाहरणद्वयमाह । यथेति । घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह । यथा वृक्षस्येति । उक्तदृष्टान्तानां दार्ष्टान्तिकमाह । न तथेति । घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वं च नास्तीत्युक्तम् । दृष्टान्तत्वेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्धं व्याकरोति । यथेत्यादिना । अनैकान्तिकत्वेनानुमानस्यामानत्वे स्थिते फलितमाह । अत इति ॥ ७ ॥

जीवो ब्रह्मणो नांशो न विकारोऽपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीवशब्दितमित्युक्तं तदयुक्तं ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमलैर्वत्त्वादनेकत्वादेकत्वायोगादित्याशङ्क्य परमार्थतो जीवस्यापि नास्ति मलैर्वत्त्वमित्याह । यथेति । श्लोकस्य तात्पर्यमाह । यस्मादिति । घटाकाशो मठाकाशः सूचीपाशाकाशश्चेत्युपाधिनिमित्तो भेदस्तद्विषया बुद्धिस्तत्प्रयुक्तो रूपभेदोऽर्थक्रियाभेदो नामभेदश्चेति व्यवहारो नभसि यथोपलभ्यते तथा देहाद्युपाधिभेदप्रयुक्तो जीवभेदस्तत्कृतो जननमरणसुखदुःखादिव्यवहारो व्यवस्थितो यस्मादास्थीयते तस्मात्तेनाविद्याविद्यमानेन कृतमेवाऽऽत्मनो रागादिमलैर्वत्त्वं न वस्तुतोऽस्तीत्येतमर्थं दृष्टान्तद्वारा प्रतिपिपादयिषन्नादौ दृष्टान्तमाहेति योजना । दृष्टान्त-

---

१ च. °ति चेत्तन्नेत्याह नेति नै°। २ च. °माका°। ३ ख. घ. ङ. ज. झ. °दि यथा। ४ ख. घ. ङ. छ. °मादित्नाऽप्य। ५ क °था च वृ°। ६ ज. काशौ वि°। ७ घ. °यवो य°। ८ झ. °र्थोमे°। ९ च. झ. °रणभेदव्य°। १० झ °हारो यस्मा°। ११ च. °त्तेनम°। १२ च. छ. झ. °प्रतिपा°। १३ ग. °धर्म्योदा°। १४ घ. °ट्त्वा°। १५ छ. झ. °त्वादेकत्वा°। १६ क. °लत्वमि°। १७ ग. ज. झ. महाका°। १८ ग. °नाविद्यमानेन। १९ क. °लत्वं न। २० ग. घ. °तिपा°।

**तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः॥८॥**
**मरणे संभवे चैव गत्यागमनयोरपि। स्थि-**
**तौ सर्वशरीरेषु आकाशेनाविलक्षणः॥९॥**
**संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः।**

---

पादद्वयेनाऽऽह। यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवन्न गगनं मलवद्याथात्म्यविवेकिनाम्। तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक्क्लेशकर्मफलमलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेकरहितानां नाऽऽत्मविवेकवताम्। न हूषरदेशस्तृड्वत्प्राण्यध्यारोपितोदकफेनतरङ्गादिमान्। तथा नाऽऽत्माऽबुधारोपितक्लेशादिमलैर्मलिनो भवतीत्यर्थः॥८॥

पुनरप्युक्तमेवार्थं प्रपञ्चयति घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षणः प्रत्येतव्य इत्यर्थः॥९॥

घटादिस्थानीयास्तु देहादिसंघाताः स्वप्नदृश्यदेहादिवन्मायाविकृ-

---

भागानिविष्टान्यक्षराणि व्याचष्टे। **यथेत्यादिना**। दार्ष्टान्तिकभागगतानामक्षराणामर्थमाह। **तथेति**। यो हि प्रत्यगात्मा विज्ञाता सोऽप्यबुद्धानां मलिनो भवतीति संबन्धः। अबुद्धानामित्येतद्व्याचष्टे। **प्रत्यगात्मेति**। अविवेकिभिरध्यारोपितेऽपि प्रत्यगात्मनो मलवत्त्वे मलप्रयुक्तं फलं तत्र वास्तवं भविष्यतीत्याशङ्क्याऽऽह। **नहीति**॥८॥

ननु जीवो मरणानन्तरं धर्मानुरोधेन स्वर्गं गच्छति। अधर्मवशाच्च नरकं प्रविपद्यते। धर्माधर्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे संभवति। तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते। एवमिहलोकपरलोकसंचरणव्यवहारविरुद्धमद्वैतमिति तत्राऽऽह। **मरण इति**। श्लोकस्य तात्पर्यमाह। **पुनरपीति**। आत्मनि सर्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः। आत्मनो हि गगनोपमस्य गत्यादेर्वस्तुतोऽसंभवादविद्याकृतस्तस्मिन्गत्यादिरित्यर्थः॥९॥

ननु संघातशब्दितानामुपाधीनां सत्यत्वात्तत्प्रयुक्तभेदस्यापि तथात्वादद्वैतानुपपत्तिवादकस्थ्यामिति चेत्तत्राऽऽह। **संघाता इति**। देवादिदेहानां पूज्यतमत्वेनाविक्याभ्युप-

---

१ झ. °षु ह्याका°। २ च. छ. झ. यिष्यन्ना°। ३ क. गमनं। ४ क. °वत्तथा°। झ. °वत्। य-थात्मवि°। ५ ज. °मलिनैर्म°। ६ ख. घ. ङ. च. झ. °ह्यूखर°। ७ च. °बुद्ध्यारो°। ८ झ. °नरकमे°। ९ ग. झ. °ध्याक्ष°। १० झ. सर्वव्य°। ११ झ. °त्युक्तार्थः। १२ झ. °तिस्तद°।

**आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥१०॥**
**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके। तेषा-**

---

तद्देहादिवच्चात्ममायाविसर्जिता आत्मनो मायाऽविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः । यद्याधिक्यमधिकभावस्तिर्यग्देहाद्य-[2]पेक्षया देवादिकार्य[3]कारणसंघातानां यदि वा सर्वेषां समतैव नैषामुपपत्तिसंभवः सद्भावप्रतिपादको हेतुर्विद्यते । नास्ति हि यस्मात्तस्मादविद्याकृता एवं न परमार्थतः सन्तीत्यर्थः ॥ १० ॥

उत्पत्त्यादिवर्जितस्याद्वयस्यास्यात्मतत्त्वस्य श्रुतिप्रमाणकत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते । रसादयोऽन्नरसमयः प्राणमय इत्येवमादयः कोशा इव कोशा अस्यादेरिवोत्तरोत्तरस्यापेक्षया बहिर्भावात्पूर्वपूर्वस्य व्याख्याता विस्पष्टमाख्यातास्तैत्तिरीय[10]के। तैत्तिरीयकशाखोपनिषद्वल्ल्यां तेषां कोशानामात्मा येनाऽऽत्मना पञ्चापि कोशा आत्मवन्तोऽन्तर-

---

गमान्नासत्यत्वसिद्धिरित्याशङ्क्य देहभेदेषु[13] केषु चिदाधिक्ये मूढदृष्ट्या कल्पितेऽपि [14]विवेकदृष्ट्या सर्वदेहानां पञ्चभूतात्मकत्वाविशेषादशेषसाम्ये वा स्वीकृते नास्ति संघातेषु[17] सत्यत्वे काचिदुपपत्तिरित्याह । **आधिक्य इति** । पूर्वार्धाक्षराणि[18] योजयति । **घटादीति** । मणिमन्त्रादिरूपां मायामिन्द्रजालप्रयोजकभूतां व्यावर्तयति । **अविद्येति** । विमता देहा न सत्या देहत्वात्संप्रतिपन्नवदित्यर्थः । ब्रह्मादिदेहानामुत्कृष्टत्वान्नाविद्याकृतत्वमित्याशङ्क्य द्वितीयार्धं व्याचष्टे । **यदीत्यादिना** ॥ १० ॥

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितम् । इदानीं तत्रैव तैत्तिरीयश्रुतेस्तात्पर्यमाह । **रसादयो हीति** । श्लोकस्य तात्पर्यमाह । **उत्पत्त्यादीति** । अक्षरार्थं कथयति । **रसादय इति** । आदिशब्देन मनोमयविज्ञानमयानन्दमया गृह्यन्ते । खड्गादेर्यथा कोशास्तदपेक्षया बहिर्भवन्ति तद्वदेते पञ्च कोशा व्यपदिश्यन्ते । तत्र हेतुमाह । **उत्तरोत्तरस्येति** । पूर्वपूर्वस्यान्नमयादेरुत्तरोत्तरप्राणमयाद्यपेक्षया बहिर्भावाद्ब्रह्म सर्वान्तरं प्रतिष्ठाभूतमपेक्ष्याऽऽनन्दमयस्यापि बहिर्भावाविशेषादविशिष्टं पञ्चानामपि कोशत्वमित्यर्थः । अवशिष्टान्यक्षराणि व्याचष्टे । **व्याख्याता इत्यादिना** । तत्र जीव-

---

१ क. °विवर्जिता । २ क. °पेक्षाया । ३ क. °र्यकर° । ४ झ. °पत्तिः सं° । ५ झ. °स्ति य° । ६ क. °व प° । ७ च. झ. °स्यात्म° । ८ च. °णत्व° । ९ क. °वेस्य व्या° । ख. ङ. ज. झ. °वेस्य पू° । १० क. °यकशा° । ११ झ. °षद्ब्रह्मवल्ल्यां । १२ झ. °न्तरात्मना स° । १३ क. झ. °षु चि° । १४ ग. झ. °वेकि° । १५ क. °हा प° । १६ ज. °षादिशे° । १७ ख. छ. °षु पुनः स° । १८ छ. °णि व्याचष्टे य° । १९ ज. °मन्त्ररू° । २० झ. °कृतमि° । २१ ङ. छ. °यकश्रु° । २२ ज. °या गृह्य° । २३ क. °क्षया ब° ।

**मात्मा परो जीवः खं यथा संप्रकाशितः ॥ ११ ॥**
**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्। पृथिव्या-**

तमेन। स हि सर्वेषां जीवननिमित्तत्वाज्जीवः। कोऽसावित्याह। पर एवाऽऽत्मा यः पूर्वं सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतः। यस्मादात्मनः स्वप्नमायादिवदाकाशादिक्रमेण रसादयः कोशलक्षणाः[1] संघाता आत्ममायाविसर्जिता इत्युक्तम्। स आत्माऽस्माभिर्यथा खं तथेति[3] संप्रकाशितः[4]। आत्मा ह्याकाशवदित्यादिश्लोकैः[5]। न तार्किकपरिकल्पितात्मवत्पुरुषबुद्धिप्रमाणगम्य इत्यभिप्रायः ॥ ११ ॥

किंचाधिदैवमध्यात्मं च तेजोमयोऽमृतमयः पुरुषः पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवाऽऽत्मा ब्रह्म सर्वमिति द्वयोर्द्वयोराद्वैतक्षयात्परं ब्रह्म

शब्दप्रवृत्तिं व्युत्पादयति। स हीति। विशिष्टं जीवशब्दार्थमाकाङ्क्षाद्वारा व्यावर्तयति। कोऽसावित्यादिना। प्रकरणाविच्छेदनार्थं प्रकरणमनुसन्धत्ते। यस्मादिति। प्रकृतस्य परस्याऽऽत्मनः श्रौतत्वे फलितमाह। नेत्यादिना ॥ ११ ॥

मनुष्योऽहं प्राण्यहं[11] प्रमाताऽहं कर्ताऽहं भोक्ताऽहमिति पञ्चानां विशिष्टानां यदेकं[12] स्वरूपमनुगतं प्रत्यक्चैतन्यं तद्ब्रह्मैवेति जीवपरयोरैक्ये तैत्तिरीयश्रुतेस्तात्पर्यमुक्त्वा[14] तत्रैव बृहदारण्यके श्रुतेरपि तात्पर्यमाह। द्वयोरिति। मधुब्राह्मणे बहुषु पर्यायेष्वाधिदैवाध्यात्मविभक्तयोः स्थानयोरयमेव स इति परं[16] ब्रह्म प्रत्यक्प्रकाशितम्[17]। अतोऽस्मिन्बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये[18] तात्पर्यमित्यर्थः। तत्र दृष्टान्तमाह। पृथिव्यामिति। न केवलमैक्ये तैत्तिरीयश्रुतेरेव तात्पर्यं किंतु बृहदारण्यकश्रुतेरपीत्याह। किंचेति। अधिदैवं पृथिव्यादावध्यात्मं च शरीरे तेजोमयो ज्योतिर्मयश्चैतन्यप्रधानोऽमृतमयोऽमरणधर्मा पुरुषः पूर्णः[23] पृथिव्यादौ शरीरे चान्तर्गतो यो विज्ञाता स पर एवाऽऽत्मा। तेन स विज्ञाता सर्वं[24] पूर्णमपरिच्छिन्नं ब्रह्मैवेति परं ब्रह्म प्रकाशितमिति संबन्धः। अपवादावस्थायामध्यारोपासंभवाद्द्वयोर्द्वयोरिति कथमुच्यते तत्राऽऽह[25]। आद्वैतक्षयादिति। द्वैतक्षयपर्यन्तं ब्रह्म प्रकाशितम्। द्वयोर्द्वयोरिति पुनरनुवादमात्रमित्यर्थः। मधुज्ञाने[26] मध्वेव प्रकाशितं[27] न ब्रह्म इत्याशङ्क्य[28] मधुज्ञानशब्दार्थं व्युत्पाद-

१ च. °वः स यथा खं प्र°। २ छ. °क्षणसं°। ३ झ. °ति प्र°। ४ च. संप्रकाशः। ५ ख. घ. °ः श्लो°। ६ झ. °त्मपुरु°। ७ क. °योरद्वै°। ८ ङ. छ. °परब्र°। ९ क. °रणवि°। १० च. छ. । ११ ग. घ. °हं क°। १२ ग. घ. झ. °देकस्व°। १३ ख. °यकश्रु°। १४ घ. °क्त्वा बृ°। °। १६ घ. °परब्र°। १७ ग. ङ. ज. झ. °त्यग्भूतं प्रका°। १८ ज. ब्रह्मैक्ये। १९ ज. २० ख. °यकश्रु°। २१ क. °श्रुतिरेव। २२ घ. °रध°। २३ ग. °र्णः सन्पृथि°। २४ ख. छ. , ख. °ह। अद्वै°। २६ झ. °ने ब्रह्म°। २७ घ. ङ. °काशते न। २८ छ. °शङ्क्याऽऽह म°।

**मुदरे चैव यथाऽऽकाशः प्रकाशितः ॥ १२ ॥**
**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते । नानात्वं**

---

प्रकाशितम् । क्वेत्याह । ब्रह्मविद्याख्यं मध्वमृतममृतत्वं मोदनहेतुत्वाद्विज्ञायते यस्मिन्निति मधुज्ञानं मधुब्राह्मणं तस्मिन्नित्यर्थः । किमिवेत्याह । पृथिव्यामुदरे चैव यथैक आकाशोऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः ॥ १२ ॥

यद्युक्तितः श्रुतितश्च निर्धारितं जीवस्य परस्य चाऽऽत्मनो जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च । यच्च सर्वमा-

---

यति । क्वेत्यादिना । शब्दस्य क्वचिदाश्रितत्वं रूपवदनुमीयते । तच्च शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाशमिति सिद्धमिति । तच्च कल्पनालाघवादेकमेवेति गम्यते । तथा च बहिरन्तश्चैकमेवाकाशमनुमानप्रामाण्यादविगतम् । तथाऽविदैवमध्यात्मं च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्धं व्याचष्टे । किमेवेत्यादिना ॥ १२ ॥

इतश्चैकत्वे श्रुतीनां तात्पर्यमित्याह । जीवात्मनोरिति । अभेदेन ब्रह्म वेद ब्रह्मैव भवतीत्यादिना ब्रह्मभावफलवादेनेत्यर्थः । यत्प्रशस्यते तद्विधेयमित्यादिन्यायात् । एकत्वदर्शने फलवादोपपत्त्युपलम्भादेकत्वं प्रशस्तत्वाद्विवक्षितमिति भावः । यच्चानेकत्वं सर्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते । यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह । नानात्वमिति । तदुभयमेकत्वप्रशंसनं नानात्वनिन्दनं चैकत्वमेव शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह । तदेवं हीति । श्लोकाक्षराणि व्याचष्टे । यदिति । अनन्यत्वमावशङ्क्यां व्यावर्त्यैकरसत्वं दर्शयति । अभेदेनेति । तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम् । शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः । व्यासपराशरादिभिश्च वेदार्थं व्याचक्षाणैरेकत्वं स्तूयते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातमित्यादिवाक्यैरित्याह । व्यासादिभिश्चेति *। द्वितीयार्धं विभजते । यच्चेति ।

---

* ङ. ति सकलमिदमहं च वासुदेव इति । सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमित्यादि ।

---

१ च. °मृतं मो°। २ ज. °ते तस्मि°। ३ घ. ङ. °नोर्जीवात्मनोर°। क. छ. झ. °नोर°। ४ घ. ङ. ज. °द्धं परिशेषादा°। ५ घ. ज. °प्याधि°। ६ घ. ते यथा°। ७ ग. ङ. ज. झ °र्थमाह। ८ छ. °त्वमावर्ति°। ९ ज. °कत्वं हि शा°। १० ङ. फलमाह। ११ छ. °त्वं प्रस्तु°।

**निन्द्यते यच्च तदेवं[1] हि समञ्जसम् ॥ १३ ॥**
**जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम् ।**

णिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्व[2]दर्शनं निन्द्यते । न तु तद्द्वितीय[4]मस्ति । द्वितीयाद्वै भयं भवति । उदरमन्तरं कुरुते । अथ तस्य भयं भवति । इदं सर्वं यदयमात्मा । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्यादिवाक्यैश्चान्यैश्च ब्रह्मविद्भिः । यच्चैतत्तदेवं[5] हि समञ्जसं ऋज्ववबोधं न्याय्यमित्यर्थः । यास्तु[6] तार्किकपरिकल्पिताः कुदृष्टयस्ता अनृज्व्यो निरूप्यमाणा[7] न घटनां[8] प्राञ्चन्तीत्यभिप्रायः ॥ १३ ॥

ननु श्रुत्याऽपि जीवपरमात्मनोः पृथक्त्वं[9] यत्प्रागुत्पत्ते[10]रुत्पत्त्यर्थोप-

तन्निन्द्यत इति यच्छब्देनोपक्रमो[11]द्रष्टव्यम् । अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः । किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणेत्यादिवाक्यैर्व्यासादयोऽपि द्वैतदर्शनं निन्दन्तीत्याह । **अन्यैश्चेति** । एवमनेक[12]त्वदर्शनस्य निन्दितत्वेन निषिद्धत्वान्नानेकत्वं शास्त्रीयमित्युक्त्वा चतुर्थपादार्थमाह । **यच्चैतदिति** । विषयभेदेन प्रशंसनं निन्दनं चेत्यर्थः । **एवं हीति** । द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्तात्पर्यगम्यत्वमित्यङ्गीकारे सतीत्यर्थः । भेददृष्टी[13]नामपि न्याय्यत्वाविशेषाद्भेददर्शननिन्द[14]नस्य कुतो न्याय्यत्वमित्याशङ्क्याऽऽह । **यास्त्विति** । या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः[15] प्रेत्य तमोमूला हि ताः स्मृताः । इति मनुवचनादित्यर्थः । न्यायविरोधादपि भेदवादानामसमञ्जसत्वमित्याह[16] । **निरूप्यमाणा इति** । वैशेषिकवैनाशिकादिकल्पना[17] भेदानुसारिण्यो भेदश्च परस्पराश्रयतादिदोषदूषितो न प्रमीयते । तेन भेदवादानामुत्प्रेक्षामूलानामसमञ्जसतेत्यर्थः[18] ॥ १३ ॥

न भेदवादानामुत्प्रेक्षा[19]मात्रमूलत्वं श्रुतिमूल[20]त्वादित्याशङ्क्य[21] परिहरति । **जीवात्मनोरिति** । उत्पत्तिर्व्युत्पत्तिः सम्यग्ज्ञानं तदर्थोपनिषदां[22] प्रवृत्त्य[23]पेक्षया प्राक्प्रवृत्त[24]कर्मकाण्डे[25]न यत्परापरयोर्नानात्वमुक्तं तदोदनं पचतीति भविष्य[26]त्प्रवृत्त्या तण्डुलेष्वोदनत्ववद्गौणमेव न मुख्यभेदार्थत्वं श्रुतेर्युज्यते । भेदस्यापूर्वत्वपुरुषार्थत्वयोरभावादित्यर्थः । श्लोकै[27]र्व्यावर्त्यामाशङ्कामाह । **नन्विति** । न केवलमस्माभिरुत्प्रेक्षितमिदं किंतु श्रुत्याऽपि

१ च. °देव हि । २ झ. °नात्वं द° । ३ झ. °नं तन्निन्द्य° । ४ ख. °तीयं द्वि° । ५ च. °देव हि । ६ च. यस्तु । ७ घ. °माना न घटीः प्रा° । ८ क. ज. घटानां । ९ घ. °क्त्वं प्राग° । १० ख. घ. ज. °त्पत्तेः व्युत्प° । ११ घ. ङ. ज. °मादितिद्रष्ट° । १२ ख. °कद° । १३ क. °दृष्टिताम° । १४ ग. झ. °न्दकस्य । १५ छ. °लाः प्रोक्तास्तमो° । १६ घ. ङ. ज. °ह । अनि° । १७ छ. °दिभेदक° । १८ क. °र्थः ॥ १३ ॥ भे° । १९ घ. °क्षामूलमात्रत्वं । २० छ. °तिस्मृत्युक्तत्वा° । २१ झ. °शङ्क्याऽऽह जी° । २२ क. घ. झ. °षदः प्र° । २३ घ. छ. °पेक्षाया । २४ ख. °वृत्ते क° । २५ ख. °ण्डे य° । २६ ख. ग. छ. झ. °ष्यद्वृत्त्या° । २७ ख. °कस्य व्या° । ज. °कद्वयव्या° ।

## भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥ १४॥

निषद्वाक्येभ्यः पूर्वं प्रकीर्तितं कर्मकाण्डे । अनेकशः कामभेदत इदंकामोऽदःकाम इति । परश्च स दाधार पृथिवीं द्यामित्यादिमन्त्रवर्णैः । तत्र कथं कर्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यत इति । अत्रोच्यते । यतो वा इमानि भूतानि जायन्ते । यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । तदैक्षत । तत्तेजोऽसृजतेत्याद्युत्पत्त्यर्थोपनिषद्वाक्येभ्यः प्राक्पृथक्त्वं कर्मकाण्डे प्रकीर्तितं यत्तन्न परमार्थम् । किं तर्हि गौणम् । महाकाशघटाकाशादिभेदवत् । यथौदनं पचतीति भविष्यद्वृत्त्या तद्वत् । न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते । स्वाभाविकाविद्यावत्प्राणिभेददृष्ट्यनुवादित्वादात्मभेदवाक्यानाम् । इह चोपनिषत्सूत्प-

दर्शितमित्यर्थः । भेदं वदन्त्याः श्रुतेस्तात्पर्यलिङ्गमभ्यासं सूचयति । अनेकश इति । कर्मकाण्डे तत्तत्कामनाभेदेन नियोज्यभेदसिद्धावपि कथं जीवपरयोर्भेदः सिध्यति परस्य तत्रानुक्तत्वादित्याशङ्क्याऽऽह । परश्चेति । हिरण्यगर्भः समवर्ततताग्र इति मन्त्रे प्रकृतो हिरण्यगर्भः सर्वनाम्ना परामृश्यते । स इमां पृथिवीं द्यामपि धृतवान् । अन्यथा गुरुत्वात्तयोरवस्थानायोगात् । न च हिरण्यगर्भातिरिक्तमीश्वरं परे बुध्यन्ते मन्त्रवर्णैः । परश्च प्रकीर्तित इति संबन्धः । कर्मकाण्डेऽर्थे ज्ञानकाण्डेनापबाध्ये ज्ञानकाण्डार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्यतामित्याशङ्क्य बाध्यबाधकभावनिर्धारणे कारणानवधारणान्नैवमित्याह । तत्रेति । श्लोकाक्षरैरुत्तरमाह । अत्रेत्यादिना । पृथक्त्वस्य गौणत्वे प्रागुक्तमेव दृष्टान्तमाह । महाकाशेति । तत्रैव श्लोकसूचितमुदाहरणमाह । यथेति । मुख्यत्वं हीत्यादि व्याचष्टे । न हीति । भेदस्यापूर्वत्वाद्यभावान्न वाक्यानां तत्परत्वं तत्परातत्परयोश्च तत्परं वाक्यं बलवदिति न्यायादखण्डवाक्यार्थस्यैव सामञ्जस्यमित्यर्थः । अद्वैतवाक्यानामपि कथमद्वैते तात्पर्यमित्याशङ्क्यापूर्वार्थत्वादुपपत्तिमत्त्वाच्चेत्याह । इह चेति । अद्वैतं तावन्मानान्तरागोचरत्वादपूर्वमेकमेवाद्वितीयमिति प्रागवस्थायां ब्रह्माद्वितीयं श्रुतम् । तदेवेदं[17] सृष्ट्वा । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरनुप्रविष्टं जीवोऽभिलप्यते । तेन जीवस्य ब्रह्मतां संभवतीत्युपपत्त्याऽपि श्रुतेरद्वैतार्थत्वं गम्यते ।

१ छ. गौणत्वं मुख्यं । २ ङ. ज. °त्वं न हि यु° । ३ ख. झ. °थिवीमि° । घ. ङ. ज. °थिवीं द्यामुतेमामि° । ४ घ. ङ. ज. °त्यादिव्युत्प° । ५ ज. °भ्यः पृथ° । ६ घ. ङ. °र्थं भविष्यदिति किं । ७ च. इहैवोप° । ८ ख. घ. °त्परोऽर्थः । ९ क. भेदवत्याः श्रु° । १० ज. °रस्यात्रानु° । ११ ख. °स हि इ° । १२ ख. °ण्डार्थे ज्ञा° । ज. °ण्डार्थज्ञा° । १३ ज. °ध्य यज्ज्ञान° । १४ ख. °रतात° । १५ घ. ङ. °त्परत्वा° । १६ क. झ. °मेवा । १७ झ. °दं दृष्ट्वा । १८ झ. प्रविष्टजी° । क. °विष्टो जी° ।

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा।

त्तिप्रलयादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम्। तत्त्वमसि अन्योऽसावन्योऽहमस्मीति न स वेदेत्यादिभिः। अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपिपादयिषितं भविष्यतीति भाविनीमेकवृत्तिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः। अथवा तदैक्षत। तत्तेजोऽसृजतेत्याद्युत्पत्तेः प्रागेकमेवाद्वितीयमित्येकत्वं प्रकीर्तितं। तदेव च तत्सत्यं स आत्मा तत्त्वमसीत्येकत्वं भविष्यतीति तां भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद्गौणम्। यथौदनं पचतीति तद्वत्॥ १४॥

ननु यद्युत्पत्तेः प्रागजं सर्वमेकमेवाद्वितीयं[1] तथाप्युत्पत्तेरूर्ध्वं जातमिदं सर्वं जीवाश्च भिन्ना इति। मैवम्। अन्यार्थत्वादुत्पत्तिश्रुतीनाम्। पूर्वमपि परिहृत एवायं दोषः। स्वप्नवदात्ममायाविसर्जिताः संघाता घटाकाशोत्पत्तिभेदादिवज्जीवानामुत्पत्तिभेदादि[2]रि[3]ति[4]। इत एवोत्प-

सृष्ट्यादिश्रुतीनामद्वैते तात्पर्यं न सृष्ट्यादावित्यनन्तरमेव वक्ष्यते। तस्मादद्वैते श्रुतेस्तात्पर्यात्तदर्थस्यैव तात्त्विकतेत्यर्थः। न केवलमुपपत्तेरेवाद्वैते श्रुतेस्तात्पर्यं किंतु नवकृत्वोऽभ्यासादपीत्याह। तत्त्वमिति। भेददृष्टेरपवादाच्च श्रुतेरद्वैते तात्पर्यं प्रतिभातीत्याह। अन्योऽसाविति। आदिशब्देनाद्वैतवादीनि द्वैतनिषेधीनि[5] च वचनान्तराणि गृह्यन्ते। एकत्वमेव प्रतिपिपादयिषितमिति[6] पूर्वेण संबन्धः। एकत्वे श्रुतेस्तात्पर्ये[7] सिद्धे तृतीयपादावष्टम्भेन फलितमाह। अत इति। श्लोकस्य साध्याहारं व्याख्यानान्तरमाह। अथ वेत्यादिना॥ १४॥

सृष्ट्यादिश्रुतिषु शब्दशक्तिवशादेव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्तिरित्याशङ्क्याऽऽह। मृल्लोहेति। उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्यावर्त्यं चोद्यमुत्थापयति। नन्विति। तासां स्वार्थनिष्ठत्वाभावान्निरवकाशं चोद्यमिति परिहरति। मैवमिति। परिहृतत्वाच्च नेदं चोद्यं सावकाशमित्याह पूर्वमपीति। यदि प्रकृतोत्पत्त्यादिश्रुतिभ्यः सकाशादुपक्रमोपसंहारैकरूप्यं[8] तात्पर्यलिङ्गमा[9]कृष्येद्[10]ध्यो[11]ध्य मृषा सृष्ट्यादिश्रुतेः स्वार्थपरत्वं परिहृतं तर्हि पुनरुपन्यासो वृथा स्यादित्या[12]शङ्क्ते। इत एवेति। उत्प[13]-

१ घ. ङ. °यं इति श्रुत्या त°। २ क. °त्तिर्भेदा°। ३ ज. °दि श्रुति°। ४ छ. °रित ए°। ङ. °रितीत ए°। ५ क. °षेधानि व°। ६. ख. °ति सं°। ७ छ. झ. °श्रुतितात्प°। ८ ग. झ. °रद्वय°। ९ झ. °रूपं ता°। १० ग. °कृष्येद्धाध्ये मृ°। झ. °कृष्ये मृ°। ११ ङ. °द्धाव्यं मृ°। ख. छ. °द्धाव्य भाष्ये मृ°। १२ ग. झ. °दित्यध्याहृत्य श°। छ. °दिति श°। १३ झ. °उत्पादितश्रु°।

**उपायः सोऽवताराय नास्ति भेदः कथंचन ॥ १५ ॥**

त्तिभेदादिश्रुतिभ्य आकृष्येह पुनरुत्पत्तिश्रुतीनामैदम्पर्यप्रतिपिपादयिषयोपन्यासः[1] । मृल्लोहविस्फुलिङ्गादिदृष्टान्तोपन्यासैः सृष्टिर्या[2] चोदिता प्रकाशिताऽन्यथा[3]न्यथा च[4] स सर्वः[5] सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्माकम्[6] । यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायि[7]का कल्पिता प्राणवैशिष्ट्यबोधावताराय तदप्यसिद्धमिति चेत् । न । शाखाभेदेष्वन्यथान्यथा च[8] प्राणादिसंवादश्रवणात् । यदि हि[9] संवादः

ष्ट्यादिश्रुतीनां मिथ्यासृष्टिपरत्वं पूर्वमुक्तम् । इह तु तासां ब्रह्मात्मैक्ये तात्पर्यप्रतिपादनेच्छया[10] पुनरुपन्यासः सिध्यतीत्युत्तरमाह । **इह पुनरिति** । पादत्रयगतान्यक्षराणि योजयति । **मृदित्यादिना** । यः शब्दशक्त्या प्रतीयते न स श्रुत्यर्थो भवति किंतु तात्पर्यगम्यस्यैव श्रुत्यर्थतेत्यत्र दृष्टान्तमाह । **यथेति** । वागादीनां प्राणानामहं श्रेयानहं श्रेयानिति[12] मिथः[13] संघर्षः संवादस्तत्र याऽऽख्यायिका[11] श्रूयते नासौ श्रुत्यर्थो भवति । वागादीनामचेतनत्वात् । तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे[14] तात्पर्यवतीत्यर्थः । उदाहरणान्तरं सूचयति । **वागादीति** । देवासुरसंग्रामे देवास्तावदसुरानभिभवितुं[15] यज्ञमुपचक्रमिरे[16] । वागादींश्चोद्गातृत्वेन वव्रिरे । तांश्च वागादीन्कल्याणा[17]सङ्गजेन[18] पाप्मना असुरा विविधुरित्याद्याख्यायिका[19] च न यथाश्रुतार्था । वागादीनां वागभावेनोद्गानासामर्थ्यात् । किंत्वेवमसुरै[20]रधर्षि[21]तत्वात्प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारशेषत्वेन सा कल्पिता । तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात्तत्कार्यस्य तद्व्यतिरेकेणाभावात्तदेवास्तीत्यद्वैतबुद्ध्यवतारोपायत्वेन सृष्ट्यादिप्रक्रिया कल्पितेत्यर्थः । देवताशब्दप्रयोगाच्चेतनत्वं[22][23] वागादीनामिति मुख्यार्थत्वं संवादादिश्रवणस्य । अतोऽसिद्धमुदाहरणमिति शङ्कते । **तदपीति** । संवादविसंवादयोरसतोः श्रुतेऽर्थे[24] प्रामाण्यमर्थवादानामित्यङ्गीकारादविरोधापेक्षमेवार्थवादप्रामाण्यम् । इह तु परस्परव्याहति[25]दर्शनान्न प्रामाण्यमिति परिहरति । **न शाखाभेदेष्विति** । प्राणादीत्यादिशब्देन मुख्यप्राणातिरिक्ता वागादयो गृह्यन्ते । उक्तमेव समाधानं व्यतिरेकमुखेन विवृणोति । **यदि हीति** । कश्चिद्विवदमानानां प्राणानां स्वयमेव

१ क. छ. ज. °नामैदं पारंप° । झ. °नामिदं प° । २ झ. °ष्टिर्या । ३ ज. °ताऽन्य° । ४ क. °था च । ५ ज. सर्वः । ६ ज. °रायास्मा° । ७ ङ. झ. °घाख्या° । ८ क. °था च । ९ क. हि वा° । १० छ. °नेच्छायां पु° । ११ ग. °या रूप° । १२ क. °यानि° । १३ छ. °थः संवाद° । १४ ग. झ. °स्वार्थता° । घ. स्वार्थे ता° । १५ क. °वितुमु° । १६ ग. झ. चक्रिरे । १७ ग. झ. °दीन्कल्याणसं° । १८ ज. संगतेन । १९ ग. झ. °त्याख्या° । २० क. ख. °सुर° । २१ घ. °रैरुद्धर्षि° । ज. °रै राध° । २२ ग. झ. °तनावत्वं । २३ क. °त्वं वागा° । २४ घ. ङ. श्रुत्यर्थे । २५ क. °व्याहृतिद° ।

**परमार्थ एवाभूदेकरूप एव संवादः सर्वशाखास्वश्रोष्यद्विरुद्धानेकप्रकारेण नाश्रोष्यत् । श्रूयते तु । तस्मान्न तादर्थ्यं संवादश्रुतीनाम् । तथोत्पत्तिवाक्यानि प्रत्येतव्यानि । कल्पसर्गभेदात्संवादश्रुतीनामुत्पत्तिश्रुतीनां च प्रतिसर्गमन्यथात्वमिति चेन्न । निष्प्रयोजनत्वाद्यथोक्तबुद्ध्यवतारप्रयोजनव्यतिरेकेण । न ह्यन्यप्रयोजनवत्त्वं संवादोत्पत्तिश्रुतीनां शक्यं कल्पयितुम् । तथात्वप्रतिपत्तये ध्यानार्थमिति चेन्न । कलहोत्पत्तिप्रलयानां प्रतिपत्तेरनिष्टत्वात् । तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वबुद्ध्यवतारायैव नान्यार्थाः कल्पयितुं युक्ताः । अतो नास्त्युत्पत्त्यादिकृतो भेदः कथंचन ॥ १५ ॥**

निर्णेतुमशक्तानां प्रजापतिमुपगतानां यस्मिन्नुत्क्रान्ते शरीरमिदं पापिष्ठतरमिव विष्ठविसै वः श्रेष्ठो भवतीति तेनोक्तानां प्रवासः श्रूयते । क्वचित्तु स्वातन्त्र्येण । यस्मिन्नुत्क्रान्ते शरीरमिदं पतति स नः श्रेयानित्यालोच्य प्रवासो व्यपदिश्यते । क्वचित्पुनर्वाक्चक्षुःश्रोत्रमनांसीति मुख्यप्राणातिरिक्ताश्चत्वारः श्रूयन्ते । क्वचिदेवमादयोऽपीत्येवं विरुद्धानेकप्रकारेण संवादश्रवणमस्तीत्याह । **श्रूयते त्विति** । प्राणसंवादश्रुतीनां मिथो विरोधान्नास्ति स्वार्थे प्रामाण्यमित्युपसंहरति । **तस्मादिति** । उक्तदृष्टान्तानुरोधादुत्पत्तिवाक्यान्यपि न विवक्षितार्थानि । क्वचिदाकाशादिक्रमेण सृष्टिः क्वचिदग्न्यादिक्रमेण क्वचित्प्राणादिक्रमेण क्वचिदक्रमेणेत्येवं परस्परपराहतिदर्शनादित्याह । **तथेति**[23] । प्रतिकल्पं सृष्टिभेदस्येष्टत्वादुक्तश्रुतीनामपि प्रतिसर्गमन्यथात्वाद्व्यवस्थयाऽर्थवत्त्वं स्यादिति शङ्कते । **कल्पेति** । सिद्धे प्रामाण्ये व्यवस्था कल्प्यते । तदेव नाद्यापि सिद्धमित्युत्तरमाह । **नेत्यादिना** । तासां प्रयोजनवत्त्वं त्वयाऽपि स्वीकृतमित्याशङ्क्याऽऽह । **यथोक्तेति** । प्रयोजनान्तराभावं प्रकटयति । **न हीति** । प्राणादिभावप्राप्तये ध्यानार्थं प्राणादिसंकीर्तनमिति शङ्कते । **तथात्वेति** । तं यथा यथोपासते तदेव भवतीति श्रुतेः । न्यायसाम्यात्कलहादिध्यानात्तत्प्राप्तिः फलं स्यात् । तच्चानिष्टमिति परिहरति । **नेत्यादिना** । प्राणसंवादश्रुतीनां प्राणवैशिष्ट्यावबोधावतारार्थत्वमुपपाद्य दार्ष्टान्तिकमुपसंहरति । **तस्मादिति** । उत्पत्त्यादिश्रुतीनामुत्पत्त्यादिपरत्वाभावे फलितं चतुर्थपादावष्टम्भेन स्पष्टयति । **अत इति** ॥ १५ ॥

१ ज. °शास्वश्रोषद्वि° । २ घ. °स्वश्रौषीद्वि° । ३ च. °द्विरुद्धा° । ४ घ. ज. नाश्रौषत् । ५ झ. तथाचोत्प° । ६ क. °तीनां प्र° । ७ झ. °नवत्त्वा° । ८ छ. °क्तप्रयोजनबुद्ध्यवतारव्यं° । ९ घ. °नत्वं स । १० छ. शक्यते क° । ११ झ. °नां तत्र प्र° । १२ झ. °दुपपत्त्यादि° । १३ च. नान्यथा क° । १४ झ. °न्यार्थावक° । १५ ग. झ. न्ते स्वश्रे° । १६ क. सर्वः श्रे° । १७ छ. °नांसि मु° । १८ ख. °चित्तु स्वगा° । १९ घ. ज. °गादीत्येवं वि° । २० ज. स्वार्थप्रा° । २१ छ. °स्परापह° । २२ क. °रापह° । २३ झ. °ति । संप्रति वाक्यं सृ° । २४ ग. °प्रति वाक्यं सृ° । २५ छ. °वस्थाः कल्पन्ते । २६ घ. °ति य° । २७ङ. °व च भ° । २८ ख. घ. सामान्यात्क° । २९ झ. °तिफ° । ३० °वबाधा° । ३१ ज. °र्थमु° ।

**आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ।**

यदि परं एवाऽऽत्मा नित्यशुद्धबुद्धमुक्तस्वभाव एकः परमार्थः सदेक-मेवाद्वितीयमित्यादिश्रुतिभ्योऽसदन्यत्किमर्थेयमुपासनोपदिष्टा । आत्मा वा अरे द्रष्टव्यः । य आत्माऽपहतपाप्मा स क्रतुं कुर्वीत । आत्मेत्येवो-पासीतेत्यादिश्रुतिभ्यः । कर्माणि चाग्निहोत्रादीनि । शृणु तत्र कारणम् । आश्रमा आश्रमिणोऽधिकृताः । वर्णिनश्च मार्गगाः । आश्रमशब्दस्य प्र-दर्शनार्थत्वात्त्रिविधाः । कथम् । हीनमध्यमोत्कृष्टदृष्टयः । हीना निकृष्टा मध्यमा उत्कृष्टा च दृष्टिर्दर्शनसामर्थ्यं येषां ते मन्दमध्यमोत्तमबुद्धिसा-मर्थ्योपेता इत्यर्थः । उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं

उत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति । आश्र-मा इति । आश्रमिणो वर्णिनश्च कार्यब्रह्मोपासका हीनदृष्टयः । कारणब्रह्मोपासका मध्यमदृष्टयः । अद्वितीयब्रह्मदर्शनशीलास्तूत्तमदृष्टयः । एवमेतेषु त्रिविधेषु मध्ये तेषां मन्दानां मध्यमानां चोत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा । तथा चो-पासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेवान्तर्भविष्यन्तीत्यर्थः । श्लो-कव्यावर्त्यामाशङ्कामाह । यदीति । तस्यैव परमार्थतः सत्त्वे प्रमाणमाह । एकमेवे-ति । द्वैतप्रतीतेर्मिथ्याद्वैतविषयत्वेनाविरोधमाह । असदिति । अद्वैतस्यैव वस्तुत्वे ध्या-नविधिविरोधमाह । किमर्थेति । उपासनोपदेशमेव विशदयति । आत्मेति । तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते । य आत्मेत्यादौ तु स विजिज्ञासितव्य इति ध्यानविधिः । स क्रतुमित्यत्र सशब्देन शमादिमानविकारी परामृश्यते । अद्वैतस्यैव वस्तुत्वे कर्मविधिविरोधोऽपि प्रसरतीत्याह । कर्माणि चेति किमर्थान्युपदिष्टानीति सं-बन्धः । अद्वैताधिकारिणोऽधिकार्यन्तरं प्रति विधिद्वयं सावकाशमिति परिहरति । शृण्विति । तत्रेत्युपासनोपदेशः कर्मोपदेशश्च गृह्यते । तदेव कारणमक्षरयोजनया-प्रकटयति । आश्रमा इति । आश्रमशब्देनाऽऽश्रमिणो गृह्यन्तां वर्णिनस्तु कथं गृह्येर-न्नित्याशङ्क्याऽऽह । आश्रमेति । शूद्रान्व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम् । त्रैविध्यमेवाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना । कार्यब्रह्म-विषयत्वान्निकृष्टत्वम् । मध्यमत्वं कारणब्रह्मविषयत्वात् । उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम् । एवं पूर्वार्धं व्याख्यायोत्तरार्धं व्याकरोति । उपासनेति । कर्मोपदेशस्यापि

१ छ. झ. °रम ए° । २ ख. छ. °मार्थतः स° । ३ ङ. वेदगाः । ४ च. झ. °मोत्तमद° । ५ घ. ङ. ज. °र्शनं सा° । ६ घ. ङ. ज. °मर्थ्यमेषां । ७ क. °र्थ्यं च ये° । ८ ङ. °ध्यद° । ९ घ. ङ. ज. °ध्ये म° । १० ज. °वाविर्भ° । ११ छ. झ. °व्यतीय° । १२ ग. झ. °कमिति । १३ झ. °कार्यान्त° । १४ ज. तत्राप्युपा° । १५ क. तदेव । १६ ज. स्फोटयति ।

**उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥ १६ ॥**
**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।**

---

कर्माणि च। न चाऽऽत्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थं दयालुर्ना वेदेनानुकम्पया सन्मार्गगाः सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति। यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि। नेदं यदिदमुपासते तत्त्वमसि आत्मैवेदं सर्वमित्यादिश्रुतिभ्यः ॥ १६ ॥

शास्त्रोपपत्तिभ्यामवधारितत्वादद्वयात्मदर्शनं सम्यग्दर्शनं तद्बाह्यत्वान्मिथ्यादर्शनमन्यत्। इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात्कथं स्वसिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हतादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिताः। एवमेवैष परमार्थो नान्यथेति तत्र तत्राऽनुरक्ताः प्रतिपक्षं चाऽऽत्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्परमन्योन्यं

---

तदर्थत्वमाह। **कर्माणि चेति।** व्यावर्त्यां शङ्कां दर्शयति। **न चेति।** वेदेनोपासनाद्युपदेशे मन्दानां मध्यमानां च कथमनुग्रहः सिध्यतीत्याशङ्क्याऽऽह। **सन्मार्गगा इति।** प्राप्नुयुरित्युपासनोपदिष्टा। कर्माणि चेति पूर्वेण संबन्धः। उपास्यं ब्रह्मैव न भवतीति प्रतिषेधान्मन्दमध्यमदृष्टिविषयत्वमुपासनस्य प्रतिभातीत्याह। **यन्मनसेति।** अद्वैतदृष्टीनां तु वर्णाश्रमभेदाभिमानाभावादेव नोपासनं कर्म वा संभवतीत्याह। **तत्त्वमसीति** ॥१६॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधोऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्मैवमित्याह। **स्वसिद्धान्तेति।** श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति। **शास्त्रेति।** तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रोपपत्ती गृह्येते। द्वैतदर्शनस्य मिथ्यादर्शनत्वे हेत्वन्तरपरत्वमवतारितस्य श्लोकस्य दर्शयति। **इतश्चेति।** इतःशब्दार्थमेव दर्शयति। **द्वैतिनामिति।** आदिशब्देन मदमानादयो गृहीताः। स्वीयं स्वीयं सिद्धान्तं व्यवस्थापयितुं तत्त्वज्ञानमधिकृत्य प्रवृत्तानां वादिनां कुतो दोषास्पदत्वमित्याक्षिपति। **कथमिति।** श्लोकाक्षरयोजनया परिहरति। **स्वसिद्धान्तेत्यादिना।** निश्चयमेव स्फोरयति। **एवमेवेति।** रागास्पदत्वेऽपि तेषां द्वेषास्पदत्वं कथमित्याशङ्क्याऽऽह। **प्रतिपक्षमिति।** उत्तरार्धं विभजते। **स्वसिद्धान्तेति।** यद्वि वादिनां प्र-

---

१ ख. घ. °तीयमिति। २ ज. °ना देवेना°। ३ च. °मसीति आ°। ४ क. °थं सि°। ५ च. °द्वादि°। ६ च. °न्तप्रद°। ७ घ. ङ. ज. °वर्त्यांश°। ज. °वर्त्यांशं द°। ८ ग. ज. ञ. वेदनो°। ९ घ. °देशम°। १० ज. °नां च क°। ११ ञ. °दृष्टी वि°। १२ ग. ञ. °न्तरमव°। १३ ग. ञ. °न सह मा°। १४ छ. °ना। उत्तरार्धेनि°। १५ ज. स्फोटयति। १६ छ. °षां दोष°।

परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥
अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।

विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते । यथा स्वहस्तपादादिभिः । एवं रागद्वेषादिदोषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः ॥ १७ ॥

केन हेतुना तैर्न विरुध्यत इत्युच्यते । अद्वैतं परमार्थो हि यस्माद्द्वैतं नानात्वं तस्याद्वैतस्य भेदस्तद्भेदस्तस्य कार्यमित्यर्थः । एकमेवाद्वितीयम् । तत्तेजोऽसृजतेति श्रुतेः । उपपत्तेश्च । स्वचित्तस्पन्दनाभावे समाधौ

त्येकं स्वसिद्धान्तत्वेनोपसंगृहीतं दर्शनं तन्निर्धारणार्थमन्योन्यं वादिनो विरोधमाचरन्तो दृश्यन्ते । न च तैरद्वैतदर्शनं विरुध्यमानमध्यवसीयते । *यथा स्वकीयकरचरणादिभिराघाते कदाचिदाचरितेऽपि द्वेषो न जायते । परबुद्ध्यभावात्तथा द्वैताभिमानिभिरुपद्रवे क्षुद्रे कृतेऽपि नाद्वैतदर्शिनस्तेषु द्वेषो जायते । सर्वानन्यत्वात्परबुद्ध्यभावादित्यर्थः । अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिज्ञातम् । कथं प्रदर्शितया प्रक्रियया प्रतिपन्नमित्याशङ्क्याऽऽह । एवमिति ॥ १७ ॥

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधे[12]ऽधिगम्यमाने कथमविरोधवाचो युक्तिरित्याशङ्क्य स्वमतपर्यालोचनया तावदविरोधमाह । अद्वैतमिति । मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन[13] तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव[14] नास्तीति मत्वाऽऽह । तेषामिति । द्वैतिनां[15] परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् । तच्च संप्रतिपन्नद्वैतवन्मिथ्येत्येवं स्थिते न [16]द्वैतेनाद्वैतस्य विरोधः[17] शक्यशङ्को भवतीत्यर्थः । श्लोकप्रतिषेध्यं प्रश्नं[19] करोति । केनेति । श्लोकाक्षरणामर्थमाचक्षाणो हेतुमाह । उच्यत इति । द्वैतस्याद्वैतकार्यत्वे प्रमाणमाह । एकमेवेति । श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्यत्वावगमात्कार्यस्य च कारणाद्भेदेन सत्त्वनिषेधात्तत्सत्यमित्यवधारणान्नाद्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः । अद्वैतदर्शनं द्वैतदर्शनैरविरुद्धमित्यत्रैव युक्तिमाह । उपपत्तेश्चेति । तामेवोपपत्तिं संक्षिप्य दर्शयति । स्वचित्तेति । सुषुप्त्याद्यवस्थायां

* अत्र ब नाम्नि पुस्तके टिप्पणम् । भागवतैकादशस्कन्धे । जिह्वां क्वचित्संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ।

१ क. °षाना° । २ ङ. यः ॥ १७ ॥ अ° । ३ क. °नात्वमस्याद्वै° । ४ क. °दस्तस्य । ५ ङ. °र्थः केन हेतुना तैर्न विरुध्यत इत्युच्यते । ए° । ६ छ. °त्येकस्व° । ७ क. °सिद्धान्तेनो° । ८ झ. °न्योन्यवा° । ९ ग. झ. °प्रव° । १० झ. °र्वानन्य° । ११ ग. झ. °तक्रि° । १२ ख. घ. ङ. ज. °धे ग° । १३ ङ. °न द्वैते° । १४ घ. °मेवास्ती° । १५ झ. द्वैतिकानां । १६ घ. द्वैताना° । १७ छ. °रोधश° । १८ छ. °ङ्का म° । १९ झ. °श्नं प्रक° । २० ग. झ. °दर्शने° । २१ छ. °त्यत्रै° ।

तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ १८ ॥
मायया भिद्यते ह्येतन्नान्यथाऽजं कथंचन । तत्त्वतो

---

मूर्छायां सुषुप्तौ[1] चाभावात् । अतस्तद्भेद उच्यते द्वैतम् । द्वैतिनां तु तेषां परमार्थत[2]श्चापरमार्थत[3]श्चोभयथाऽपि द्वैतमेव । यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानाम् । तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते[4] तैः । इन्द्रो मायाभिः पुरुरूप ईयते । न तु तद्द्वितीयमस्तीति श्रुतेः । यथा मत्तगजारूढ उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं[5] वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या तद्वत् । ततः परमार्थतो ब्रह्म[6]विदात्मैव द्वैति[7]नाम् । तेनायं हेतुनाऽस्मत्पक्षो न विरुध्यते तैः ॥ १८ ॥

द्वैतमद्वैतभेद इत्युक्ते द्वैतमप्यद्वैतवत्परमार्थसदिति स्यात्कस्यचिदाशङ्केत्यत आह । यत्परमार्थसदद्वैतं मायया भिद्यते ह्येतत्तैमिरिकाने-

---

स्वकीयचित्तस्पन्दनाभावे मिथ्याज्ञानोपरमे सति द्वैतदर्शनाभावादद्वैतं सिद्धम् । ततश्च स्वप्नवज्जाग्रद्भेदानामुत्पत्तिदर्शनादित्युपपत्तेर्द्वैतमद्वैतकार्यं न च कारणं तत्कार्यप्रतिभासैर्विरुध्यते । कार्यस्य वाचारम्भणमात्रत्वात्कारणातिरेकेणाभावादित्यर्थः । तेषामित्यादिभागं विभजते । द्वैतिनां त्विति । परमार्थद्वैतांशेनाद्वैतविरोधमाशङ्क्य द्विधा व्यवहारेऽपि विमतस्य द्वैतस्य द्वैतत्वादेव संप्रतिपन्न[10]व[11]न्मिथ्यात्वसिद्धेर्न तेन विरोधोऽद्वैतस्येति मन्वानः सन्नाह । यदि चेति । भ्रान्तिमूल[12]द्वैतदर्शनैरद्वैतदर्शनं प्रमाणमूलमविरुद्धमित्येतद्दृष्टान्तेनोपपादयति । यथेत्यादिना । कार्यकारणभूतयोर्द्वैताद्वैतयोर[13]-[14]विरोधे सिद्धे फलितमाह । तत इति । अद्वैति[15]नां द्वैतिनां च प्रातिस्विकपक्षपर्यालोचनातो द्वैतपक्षैरद्वैतप[16]क्षो विरुद्धो न भवतीति फलितमुपसंहरति । तेनेति ॥ १८ ॥

अद्वैतमेव द्वैतात्मना परिण[17]मते चेद्द्वैतमपि तात्त्विकं स्यादित्याशङ्क्याऽऽह । मायेति । विवर्तवादानङ्गीकारे दोषमाह । तत्त्वत इति । पूर्वार्धव्यावर्त्यामाशङ्कामादर्शयति । द्वैतमिति । तत्र पूर्वार्धाक्षराण्यवतार्य व्याकरोति । अत आहेति । विमतो भेदो मिथ्याभेदत्वाच्चन्द्रादिभेदवदित्यर्थः । विमतं तत्त्वतो भेदरहितम् । निरव-

---

१ च. झ. °प्तौ वाऽभा° । २ क °तश्चो° । ङ. तश्चापरार्थतश्चोभ° । ३ झ. र्थश्चोभ° । ४ ज. °ते । इ° । ५ ज. °हं गजं वा° । ६ क. °ह्यचिदा° । ७ च. झ. °तिनस्तेना° । ८ झ. °द्वैत इ° । ९ ग. झ. °प्रजा° । १० झ. °भ्रमि° । ११ क. °वन्न मि° । १२ ख. ग. छ. झ °मूलैर्द्वैत° । १३ ज. रद्वैतविरुद्धत्वे सि° । १४ ख. घ. ङ. विरुद्धत्वे सि° । १५ ख. °नां प्रा° । १६ क. पक्षैर द्वैतप° । १७ छ. °णतं चे° ।

**भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥ १९ ॥**
**अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥ २० ॥**

---

कचन्द्रवद्रज्जुः[1] सर्पधारादिभिर्भेदैरिव[2] न परमार्थतो निरवयवत्वादात्मनः । सावयवं[3] ह्यवयवान्यथात्वेन भिद्यते । यथा मृद्घटादिभेदैः । तस्मान्निरवयवमजं नान्यथा कथंचन केनचिदपि प्रकारेण न भिद्यत इत्यभिप्रायः । तत्त्वतो भिद्यमाने ह्यमृतमजमद्वयं स्वभावतः सन्मर्त्यतां व्रजेत् । यथाऽग्निः शीतताम् । तच्चानिष्टं स्वभाववैपरीत्यगमनम् । सर्वप्रमाणविरोधात् । अजमव्ययमात्मतत्त्वं माययैव भिद्यते न परमार्थतः । तस्मान्न परमार्थसद्द्वैतम् ॥ १९ ॥

ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैवाऽऽत्मतत्त्वस्यामृतस्य स्वभावतो जातिमुत्पत्तिमिच्छन्ति परमार्थत एव तेषां जातं[5] चेत्तदेव मर्त्यतामेष्यत्यवश्यम् । स चाजातो ह्यमृतो भावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति । न कथंचन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥ २० ॥

---

यवत्वान्नित्यत्वादजत्वाच्च व्यतिरेकेण मृदादिवदित्याह । नेत्यादिना । निरवयवत्वेऽपि वस्तुनः स्फुटनधर्मत्वमाशङ्क्याऽऽह । सावयवं हीति । उक्तमनुमानं निगमयति । तस्मादिति । अन्यथा परमार्थत्वेनेत्यर्थः । पुनर्नञनुकर्षणमन्वयार्थं कार्यत्वधर्मत्वांशत्वादिरत्र प्रकारोऽभिप्रेतः । विपक्षे दोषं वदन्द्वितीयार्धं विवृणोति । तत्त्वत इति । प्रसंगस्येष्टत्वमाशङ्क्य निराचष्टे । तच्चेति । विवर्तवादमुपसंहरति । अजमिति । स्थिते विवर्तवादे फलितमाह । तस्मादिति ॥ १९ ॥

स्वपक्षमुक्त्वा स्वयूथ्यपक्षमनुभाष्य दूषयति । अजातस्येति । अनुवादे विभागं विभजते । ये त्विति । स्वभावत एवाजातस्य[11] स्वभावत एवामृतस्य चाऽऽत्मतत्त्वस्य परमार्थत एव जातिमुत्पत्तिं ये स्वयूथ्याः स्वीकुर्वन्तीत्यर्थः । जातस्य हि ध्रुवो मृत्युरितिन्यायेन दूषयति । तेषामिति । अजातो हीत्याद्यक्षराण्युक्तेऽर्थे[12] योजयति । स चेति ॥ २० ॥

---

१ झ. °द्रज्जुस° । २ क. सर्पादिधा° । ३ ज. °यवत्वं ह्य° । ४ छ. °यया भि° । ५ च °तं चैतदेव । ६ क. °मृतभा° । ७ क. त्वेत्वस्त्व° । ८ झ. °शकला° । ९ ख. ग. ङ. छ. °दभा° । १० छ. एव जा° । ११ ङ. °वाऽजस्य । १२ ख. घ. ङ. छ. ज °ण्युक्तार्थे ।

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा । प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ २१ ॥**
**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् । कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥**

---

यस्मान्न भवत्यमृतं मर्त्यं[1] लोके नापि मर्त्यममृतं तथा[2] । ततः प्रकृते[3] स्वाभावस्यान्यथाभावः[4] स्वतः प्रच्युतिर्न कथंचिद्भविष्यति । अग्नेरिवौष्ण्यस्य ॥ २१ ॥

यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः[5] स भावः[6] स्वभावतोऽमृत इति प्रतिज्ञा मृषैव । कथं तर्हि कृतकेनामृतस्तस्य[7] स्वभावः कृतकेनामृतः[8] स कथं स्थास्यति निश्चलोऽमृतस्वभावतया[9] न कथंचित्स्थास्यत्यात्मजातिवादिनः[10] सर्वदाऽजं नाम नास्त्येव सर्वमेतन्मर्त्यम् । अतोऽनिर्मोक्षप्रसंग इत्यभिप्रायः[11] ॥ २२ ॥

---

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति । न भवतीति । तत्र पूर्वार्धं हेतुत्वेन व्याचष्टे[12] । यस्मादिति । उत्तरार्धं हेतुमत्त्वेन[13] योजयति । तत इति । यथाग्नेः स्वभावभूतस्योष्णत्वस्यान्यथात्वं[14] शैत्यगमनमयुक्तं तथाऽन्यत्रापि स्वभावस्यान्यथात्वमनुचितं स्वरूपनाशप्रसंगादित्यर्थः ॥ २१ ॥

ननु ब्रह्म कारणरूपेण प्रागुत्पत्तेरमृतमपि[15] कार्याकारेणोत्पत्त्युत्तरकालं मर्त्यतां गमिष्यति । ततो रूपभेदादुभयमविरुद्धमिति[16] तत्राऽऽह[17] । स्वभावेनेति । पूर्वार्धं साध्याहारं योजयति । यस्येति । प्रागवस्थायामपि कारणस्यैव कार्याकारेण जन्मयोग्यतया मर्त्यत्वावगमान्मृषैव प्रतिज्ञा स्यादित्यर्थः । कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविलयेनामृतस्तस्य[18] वादिनः स कारणाख्यो भावो भवतीति प्रतिज्ञा युक्तेत्याह । कथमित्यादिना । भवतु प्रलयावस्थायाममृतावस्थापरिणामेनामृतत्वं ततो वा किं स्यादित्याशङ्क्याऽऽह । कृतकेनेति । कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः । किंचास्यामवस्थायां कार्यमात्रं वस्त्वित्यजं ब्रह्मास्मीति ज्ञानाभावान्मोक्षो न स्यादित्याह । आत्मेति ॥ २२ ॥

---

१ क. मर्त्यलो°। २ च. °था । यतः । ३ क. °कृते स्व°। ४ च °भावः स्व°। ५ च. ज. झ. °त्तेः स्व°। ६ ज °भावो मृ°। ७ ख. घ. ज. °स्य भा°। ङ. छ. °स्य; सभा°। ८ च. °तः सन्क°। ९ ख. घ. ज. ज. °वस्तथा । १० °त्यात्माजा°। ११ ख. घ. ङ. ज. इति भावः ॥ १२ ॥ १२ क. °ष्टे । तस्मा° । १३ ख. तुल्वेन । १४ क. तस्येष्टत्व°। १५ °मृतत्वमपि । १६ ग. झ. °यतः वि°। १७ ग. झ. °तदाह । १८ ङ. °तस्य ।

**भूततोऽभूततो वाऽपि सृज्यमाने समा श्रुतिः ।**
**निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥**

नन्वजातिवादिनः सृष्टिप्रतिपादिका श्रुतिर्न संगच्छते प्रामाण्यम् । बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः । सा त्वन्यपरा । उपायः सोऽवताराये त्यवोचाम । इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधाशङ्कामात्रपरिहारार्थौ । भूततः परमार्थतः सृज्यमाने वस्तुन्यभूततो मायया वा मायाविनेव सृज्यमाने वस्तुनि समा तुल्या सृष्टिश्रुतिः । ननु गौणमु-

---

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्यत्वमाशङ्क्य निरस्यति । **भूतत इति ।** परिणामवादे विवर्तवादे च सृष्टिश्रुतेरविशेषादद्वैतानुरोधिश्रुतियुक्तिवशाद्विवर्तवादस्यैव स्वीकर्तव्यतेति भावः । सृष्टिश्रुतेरद्वैतानुगुण्ये प्रमाणयुक्त्यनुगृहीतमद्वैतमेवाभ्युपगन्तव्यमिति फलितमाह । **निश्चितमिति ।** श्लोकव्यावर्त्यां शङ्कां दर्शयति । **नन्विति ।** यद्यात्मा कार्याकारेण न जायते तर्हि सृष्टिश्रुतिरश्लिष्टा स्यादित्यर्थः । सृष्ट्यनुवादिनी श्रुतिरस्तीत्यङ्गीकरोति । **बाढमिति ।** तस्या मिथ्यासृष्ट्यनुवादित्वेन कथमुपपत्तिरित्याशङ्क्याऽऽह । **सा त्विति ।** कथमद्वैतपरत्वेन सृष्टिश्रुतेरुपपत्तिरित्याशङ्क्याऽऽह । **उपाय इति ।** यदि सृष्टिश्रुतेरद्वैतपरत्वेन तद्विरोधसमाधी अवस्तादेवोक्तौ तर्हि पुनश्चोद्यं तत्परिहारश्चायुक्तौ पुनरुक्तेरित्याशङ्क्याऽऽह । **इदानीमिति ।** मिथ्यासृष्टिवादे श्रुतिपदानामसृजताऽभवदित्यादीनामसामञ्जस्यविरोधाशङ्कायां तन्मात्रं परिहर्तुं पुनश्चोद्यपरिहारावित्यर्थः । श्लोकस्य तात्पर्यमुक्त्वा पूर्वार्धाक्षराणि व्याकरोति । **भूतेत इति ।** माया ह्येषा मया सृष्टेत्यादिवत्तत्तेजोऽसृजतेति श्रुतिः । सच्च त्यच्चाभवदिति श्रुतिस्तु देवदत्तो व्याघ्रोऽभवदितिवत् । न च सत्यत्वं विशेषणमत्रोपलभ्यते । तेन मायामय्यां सृष्टाविष्टायामपि सृष्टिश्रुतिः श्लिष्टेत्यर्थः । गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्यायमाश्रित्य शङ्कते । **नन्विति ।** अग्निर्माणवक इत्यत्र माणवकेऽग्निशब्दप्रयोगेऽप्यग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतेर्मुख्यमेव प्रथमं प्रतिभातीति मुख्ये पदव्युत्पत्तेर्मुख्यार्थतया सत्या सृष्टिरेष्टव्येत्यर्थः । मुख्यसृष्ट्यङ्गीकारेऽ-

---

१ ज. °क्तिमुक्तं । २ ख. °दिकश्रु° । ३ ज. °या मा° । ४ क. मायां वि° । ५ घ. ङ. ज. °वर्त्यांश° । छ. °वर्त्यांमाश° । ६ क. छ. °रश्च यु । ७ ग. ज. °नामञ्ज° । ८ ग. ङ. °रोधश° । ९ ज. °त इ° । १० घ. °च्च सच्चा° । ११ क. °ति । तत्र । न । १२ ग. घ. °णमेनापे° । १३ क. °ख्ये कार्यसं । १४ क. °योगोऽप्य° । १५ ज. °या सृ° ।

# नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।

रूपयोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता । न । अन्यथा सृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्चेत्यवोचाम । अविद्यासृष्टिविषयैव सर्वा गौणी मुख्या च सृष्टिर्न परमार्थतः । सबाह्याभ्यन्तरो ह्यज इति श्रुतेः । तस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तं च । युक्त्या च संपन्नं तदेवेत्यवोचाम पूर्वैर्ग्रन्थैः । तदेवं श्रुत्यर्थो भवति नेतरत्कदाचिदपि ॥२३॥

कथं श्रुतिनिश्चय इत्याह । यदि हि भूतत एव सृष्टिः स्यात्ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थमाम्नायो न स्यात् । अस्ति च नेह नानास्ति किंचनेत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः । तस्मादात्मैकत्वप्रतिप-

पि सत्या सृष्टिर्न सिध्यति । अस्मत्पक्षे सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति । नेत्यादिना । लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेन प्रसिद्धत्वेऽपि फलाभावान्न तत्र श्रुतितात्पर्यमित्याह । निष्प्रयोजनत्वाच्चेति । अन्यथा सृष्टेरप्रसिद्धत्वमेवं स्पष्टयति । अविद्येति । गौणी स्वप्ने रथादिसृष्टिः । मुख्या जागरे घटादिसृष्टिः सर्वाऽप्यविद्यावस्थायामेव तस्यां सत्यामेव भावान्न तत्त्वदृष्ट्या काऽपि सृष्टिः संभवति । तथा भूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावासंभवात्तदतिरेकेण च सृष्टेरयोगादित्यर्थः । वस्तुस्वरूपालोचनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति । सबाह्येति । सृष्टेरविद्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्धं विभजते । तस्मादिति । निरवयवत्वं विभुत्वमित्यादियुक्तिः । तेनाद्वैतमेव श्रुतितात्पर्यगम्यं न द्वैतमिति फलितमाह । तदेवेति ॥ २३ ॥

सृष्टेर्मृषात्वस्पष्टीकरणद्वारेणाद्वैतमेव श्रुत्यर्थतया निर्धारयितुं श्रौतनिश्चयमेव विवृणोति । नेहेति । आकाङ्क्षां प्रदर्श्य श्लोकाक्षराणि व्याकरोति । कथमित्यादिना । तत्राऽऽद्यपादे व्यतिरेकं दर्शयित्वा पुनरन्वयाख्यानेन व्याचष्टे । यदि हीति । द्वैतभावश्चेत्प्रतिषिध्यते कथं तर्हि सृष्टिरुपदिश्यते तत्राऽऽह । तस्मादिति । यथा प्राणवैशिष्ट्यदृष्ट्यर्थं प्राणसंवादः श्रुतिषु कल्प्यते तथा सृष्टिरेकत्वप्रतिपत्त्यर्थत्वेन कल्पिता । वास्तव्याः सृष्टेरयोगस्योपदिष्टत्वादित्यर्थः । कल्पिता सृष्टिरित्यत्र हे-

१ च. °त्तिर्न युक्तेतिचेत् । न । २ झ. °मार्थः स° । ३ छ. पूर्वग्रन्थैः । ४ घ. °व भ° । ५ क. °त ए° । ६ ख. घ. ङ. ज. °नार्थ आम्ना° । ७ ख. °सिध्येत् । अ° । छ. सिध्यतीत्यस्मिन्पक्षे । ग. घ. झ. सिध्येदस्मिन्पक्षे । ज. सिध्यत्यस्मिन्पक्षे । ८ ग. °व स्फुटय° । ९ घ. °दिदृष्टिः । १० घ. °सृष्टिरेवं यदि सृष्टिः स° । ११ ख. घ. ङ. छ. ज. °तस्य स्व° । १२ ख. घ. ज. °द्यायां वि° । १३ ग. झ. °धारितुं । १४ ज. अकाङ्क्षां । १५ ग. झ. °त्राऽऽद्यं पादं व्य° । १६ ज. °ण वैशिष्ट्यार्थं । १७ ख. °स्तव्यायाः सृ° । १८ झ. °पपादितत्वादि° ।

## अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥

[1]त्यर्थो कल्पिता सृष्टिरभूतैव प्राणसंवादवत् । इन्द्रो मायाभिरि[2]त्यभूतार्थप्रतिपादकेन मायाशब्देन[3] व्यपदेशात् । ननु प्रज्ञावचनो मायाशब्दः । सत्यम् । इन्द्रियप्रज्ञाया अविद्या[4]मयत्वेन मायात्वाभ्युपगमाददोषः । मायाभिरिन्द्रियप्रज्ञाभिरविद्यारूपाभिरित्यर्थः । अजायमानो बहुधा विजायत इति श्रुतेः । तस्मान्माययैव जायते तु सः । तुशब्दोऽवधारणार्थः । माययैवेति । न ह्यजायमानत्वं बहुधा जन्म चैकत्र संभवति । अग्नाविव [5]शैत्यमौष्ण्यं च । फलवत्त्वाच्चात्मैकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थः । तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात् । मृत्योः स मृत्युमाप्नोतीति निन्दितत्वाच्च सृष्ट्यादिभेददृष्टेः ॥ २४ ॥

त्वन्तरं दर्शयन्द्वितीयं पादमवतार्य तात्प[6]र्यमाह । **इन्द्र इति ।** मायाशब्देन सृष्टेर्व्यपदेशादसौ कल्पिता युक्तेति शेषः । अभिधानग्रन्थे प्रज्ञानामसु पाठान्मायाशब्दो मिथ्यार्थो न भवतीति शङ्कते । **नन्विति ।** मायाशब्दस्य प्रज्ञानामसु काचित्कं पाठमङ्गीकरोति । **सत्यमिति ।** कथं तर्हि मिथ्यार्थत्वं तत्राऽऽह । **इन्द्रियेति ।** न हि मायाशब्दिता प्रज्ञा ब्रह्मचैतन्यम् । भूयश्चान्ते विश्वमायानिवृत्तिरित्यादौ† निवृत्तिश्रवणात् । किंत्वसाविन्द्रियज[10]न्या तस्याश्चाविद्यान्वयव्यतिरेकानुविधायितया विद्यात्वेन मिथ्यात्वा[12]न्मायाशब्दस्य मिथ्यार्थत्वेनानुपपत्तिरित्यर्थः । तात्पर्यार्थमुक्त्वा तत्रैवाक्षरानुगुण्यमाह । **मायाभिरिति ।** पुरुरूपः सन्नीयत इति संबन्धः । मायामयी सृष्टिरित्यत्र हेत्वन्त[13]रपरत्वेन तृतीयपादमवतारयति । **अजायमान इति ।** अजायमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति । **तस्मादिति ।** अश्रुतस्य कथमेवका[14]रस्यावापः स्यादित्याशङ्क्याऽऽह । **तुशब्द इति ।** अवधारणरू[15]पमर्थमेवाभिनयति । **माययैवेति ।** कस्मादि[16]त्थमवधार्यते । वास्तवे जन्मनि का वस्तुक्षतिरित्याशङ्क्याऽऽह । **न ह्यजेति ।** आत्मैकत्वज्ञानमेव सृष्टिश्रुतितात्पर्यगम्यं सृष्टिस्तु तच्छेषत्वादविवक्षितेत्यत्र हेत्वन्तरमाह । **फलत्वाच्चेति ।** तस्य फलवत्त्वे प्रमाणमाह । **तत्रेति ।** एकत्वमाचार्योपदेशमनुपश्यतः साक्षात्कुर्वतस्तत्रैकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः । न केवलं विफलत्वाद्भेददृष्टिरविवक्षिता किंतु [17]निन्दितत्वेन निषिद्धत्वादनर्थक[18]रत्वाच्चेत्याह । **मृत्योरिति ॥ २४ ॥**

† ङ. निवृत्तिरेव त्रिधा नश्यति चाऽऽत्ममायेति श्वेताश्वतरोपनिषदि इत्यादौ निवृत्ति श्र°।

१ घ. °त्यर्थे क°। २ ख. छ. ङ. °रित्यप्यभू°। ३ झ. °न सृष्टेर्व्य°। ४ ज. झ. °यात्वे । ५ छ. शैत्यौष्ण्यं । ६ झ. °तार्यमाह । ७ घ. ङ. ज. °त्पर्यार्थमा°। ८ ग. झ. °थ्यात्वं । ९ ख. °रिति नि°। १० झ. °जन्यतया त°। ११ ख. °द्यामयत्वेन १२ ग. ज. °त्वार्थे°। १३ झ. °रत्वे । १४ ज. °रस्यापवादः स्या°। १५ छ. °पमेवार्थ । १६ ग. झ. °दित्यवतार्य । १७क. नित्यत्वेन । १८ ग. झ. °कत्वा°।

**संभूतेरपवादाच्च संभवः प्रतिषिध्यते। को न्वेनं**

अन्धं तमः प्रविशन्ति ये संभूतिमुपासत इति[1] संभूतेरुपास्यत्वापवादात्संभवः प्रतिषिध्यते। न हि परमार्थतः संभूतायां संभूतौ तदपवाद उपपद्यते। ननु विनाशेन संभूतेः समुच्चयविध्यर्थः[2] संभूत्यपवादः। यथाऽन्धं तमः प्रविशन्ति येऽविद्यामुपासत इति[3]। सत्यमेव देवतादर्शनस्य संभूतिविषयस्य[4] विनाशशब्दवाच्यस्य[5] कर्मणः समुच्चयविधानार्थः संभूत्यपवादः। तथाऽपि विनाशाख्यस्य कर्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्ववद्देवतादर्शनकर्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्मफलरागप्र-

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह। **संभूतेरिति**। सम्यग्भूतिरैश्वर्यं[6] यस्याः सा संभूतिर्देवता हिरण्यगर्भाख्या। तस्याश्च कार्यमध्ये श्रेष्ठाया निंदितत्वात्प्रधानमल्लनिबर्हणन्यायेन संभवशब्दितं कार्यमेव निषिध्यते। तथा च सिद्धं तस्या वस्तुत्वमित्यर्थः। कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च यथोक्तार्थसिद्धिरित्याह। **को न्वेनमिति**। पूर्वार्धं व्याकरोति। **अन्धमिति**। संभूत्युपासनाया मन्त्रार्धेना[7]ऽऽद्येन निन्दां विधाय ततो भूय इवेत्यदिनोत्तरार्धेन संभूतेरुक्ताया देवताया हेयत्वमुपपाद्यते। ततश्च प्रधानभूतदेवतोपास्यत्वापवादात्ततोऽर्वाक्तनं सर्वमेव संभवशब्दितं[8] कार्यमात्रं निषिध्यते। तथा च तदवस्तुत्वसिद्धिरित्यर्थः। संभूतेरपवादेऽपि तस्मिन्[9]मिथ्यात्वनियमाभावान्न कार्यमात्रस्य मिथ्यात्वं शक्यं प्रतिज्ञातुमित्याशङ्क्याऽऽह। **न हीति**। संभूतिनिन्दा[10] तदवस्तुत्वख्यापनार्था न भवति। किंतु विनाशेन कर्मणा देवतोपासनस्य समुच्चयविध्यर्था[11]। समुच्चयविधानस्य फलवत्त्वादिति[12]। **नन्विति**[13]। अपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह। **यथेति**। अत्र खल्वविद्याशब्दितकर्मापवादो विद्याकर्मणोः समुच्चयविध्यर्थः स्थितो विद्यां चाविद्यां च यस्तद्वेदोभयं सहेति श्रवणादित्यर्थः। उक्तं चोद्यमनुजानाति। **सत्यमिति**। तर्हि संभूत्यपवादस्य[14] तदवस्तुत्वख्यापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्याविद्यावस्थायामवस्थितफलवत्त्वाद्यदवस्तुत्वं संभूत्यादेर्निन्दाधीनमुक्तं[15] तत्तदवस्थमेवेति[16] मन्वानः सन्नाह। **तथापीति**। यथाऽग्निहोत्रादेः शास्त्रीयस्य कर्मणोऽशास्त्रीयप्रवृत्तिरूप[17]मृत्युतरणार्थत्वं तथा साधनाद्येषणारूपमृत्युतरणार्थत्वं समुच्चयस्यापि वाच्यम्।

१ क. °ति श्रुतेः सं°। २ च. विधानार्थः। ३ ज. °ति। मैवं विना सत्यदे°। ४ ज. °स्य शब्द°। ५ ङ. °स्य च क°। ६ ख. °श्वर्यं य°। ७ ग. झ. °र्धेन नि°। ८ ज. °ब्दितका°। ९ ख. ग. छ. झ. °तस्मि°। १० क. °तिर्निन्दा। ११ °विधा°। १२ ग. घ. झ. °लत्वा°। १३ क. न हीति। १४ ग. झ. °दस्त्वव°। १५ ग. झ. °निषेधाधी°। १६ ग. झ. तद°। १७ ख. ग. झ. °तिस्वरू°।

